सरस्वतीभवन-ग्रन्थमाला

[ ११९ ]

महाकविमङ्खकप्रणीता

# साहित्यमीमांसा




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 119 ]

# SĀHITYAMĪMĀṀSĀ

OF

**MAṄKHAKA**

EDITED BY

GAURINATH SASTRI

Vice-Chancellor

Sampurnanand Sanskrit Vishvavidyalaya



VARANASI

1984

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalay,
Varanasi.

Available at :—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221002.

First Edition : 1100 Copies
Price Rs. 44.00

Printed by :—
Ghan Shyam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi-221002

सरस्वतीभवन-ग्रन्थमाला

[ ११९ ]

महाकविमङ्खकप्रणीता

# साहित्यमीमांसा

सम्पादकः

श्रीगौरीनाथशास्त्री

कुलपतिः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



वाराणस्याम्

२०४० तमे वैक्रमाब्दे १९०५ तमे शकाब्दे १९८४ तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी।

प्राप्तिस्थानम् :—
**विक्रयविभागः**,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२.

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्—४४·०० रूप्यकाणि

मुद्रकः—
**घनश्याम उपाध्यायः**
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य

# प्रास्ताविकम्

भारतीयं काव्यशास्त्रं खलु शास्त्रान्तरवत् प्राचीनां महती परम्परामवलम्बते। यद्यपि महाभारतकालात् प्राग्वर्तिना महर्षियास्केन निरुक्तशास्त्र उपमारूपकाद्यलङ्काराणां स्वोपज्ञतया निरूपितत्वाद् गार्ग्यसंज्ञकस्य सुधिय उपमालङ्कारलक्षणस्य समुद्धृतत्वाच्चास्य काव्यशास्त्रस्य सुप्राचीनत्वमुपपद्यते, तथापि काव्यशास्त्रस्य विद्यमानपरम्परायास्तथ्यानि वेदादिषु नावाप्यन्ते। नादतनुना शिवेन सह सम्बन्धः स्थापितः काव्यशास्त्रस्योत्पत्ते राजशेखरेण। ततः प्रवर्तमानो दीर्घः शिष्यसम्प्रदायः समुल्लिखितस्तेन। तेष्वष्टादशाचार्येषु भरतनन्दिकेश्वराचार्ययोर्ग्रन्थाः साम्प्रतमपि समासाद्यन्त इति कविकल्पनामात्रं नास्ति तदुल्लेखनम्। भरतेन नाट्यशास्त्रे स्वर्णनाभकुचुमारादयः पुरातना आचार्या निर्दिष्टाः सन्ति। एवमेवान्यत्र काव्यशास्त्रग्रन्थेषु काश्यपवररुचिब्रह्मदत्तनन्दिस्वामिप्रभृतयः प्राचीनाः काव्यशास्त्राचार्याः समुद्ध्रियन्ते। अग्निपुराणेऽलङ्काररसरीतिगुणदोषध्वनिप्रभृतयो विषयाः साधु प्रतिपादिताः।

षष्ठख्रीस्तशताब्द्यामवस्थिताद् भामहाचार्यादारभ्य काव्यशास्त्रपरम्परायाः समुन्नतिः समाम्नायते सूरिभिः। दण्डि-भट्टोद्भट-वामन-रुद्रटानन्दवर्द्धन-राजशेखर-धनञ्जय-धनिकाभिनवगुप्त-कुन्तक-महिमभट्ट-क्षेमेन्द्र-भोजराज-मम्मट-रुय्यकादिभिः काव्यशास्त्राचार्यैः स्वप्रणीताभिः कृतिभिः काव्यशास्त्रीया विविधा दिशो विनिर्दिष्टाः। निखिले भारते वर्षे काव्यशास्त्रानुशीलनमुपक्रान्तम्।

कश्मीरेषु महिमभट्ट-क्षेमेन्द्र-मम्मट-रुय्यकादीनां व्यक्तिविवेककविकण्ठाभरणकाव्यप्रकाशालङ्कारसर्वस्वादय उज्ज्वलनक्षत्राणीव देदीप्यन्ते काव्यशास्त्रीयगगनमण्डले। कैश्चिद् विद्वद्भिः साहित्यमीमांसाभिधो ग्रन्थोऽपि रुय्यककृतः समुद्घोष्यते, तन्न विचारसहम्। व्यक्तिविवेकव्याख्यायां मङ्खककृतित्वेन प्रथितायामाख्यातं तेनैव—"अस्य च विधेयाविमर्शस्यानन्तेतरप्रसिद्धलक्ष्यपातित्वेनास्माभिर्नाटकमीमांसायां साहित्यमीमांसायां च तेषु तेषु स्थानेषु प्रपञ्चः प्रदर्शित इति ग्रन्थविस्तरभयादित एवोपरम्यते" इति साहित्यमीमांसा मङ्खकविरचितेत्यवसीयते।

यथा साहित्यमीमांसा भ्रान्त्या रुय्यककृता समास्थीयते, तथैव रुय्यककृतम् अलङ्कारसर्वस्वमपि मङ्खकनाम्ना कैश्चित् सम्बध्यते। इह भ्रान्तिहेतुर्निरूप्यते। आचार्यरुय्यको मङ्खकस्य शिक्षागुरुरिति तद्ग्रन्थेषु शिष्येण कस्मिंश्चित् परिवर्तनसंशोधनादिरूपसाहायके विहिते सति तस्य ग्रन्थस्य तन्नाम्ना रचनासम्बन्धो नैव युज्यते। अलङ्कारसर्वस्ववृत्तौ मङ्खकेन प्रतिसंस्कृतायां सत्यां तत्र तन्नामोल्लेखो नैवाश्चर्याय कल्पते। मङ्खकस्य समुल्लेखनीयं कीर्तिसौरभं श्रीकण्ठचरिताख्यं महाकाव्यं विराजते, तद्गुरुणाऽऽचार्य-

रुय्यकेण स्वकीयेऽलङ्कारसर्वस्वे समुद्ध्रियमाणम्। अनेकार्थकोशः, नाटकमीमांसा, बृहती, हर्षचरितवार्त्तिकम् इत्येतेषां ग्रन्थानामपि प्रणेतृतया मङ्खकः प्रसिध्यतीति महाकवि-कोशकार-टीकाकारादिस्वरूपेण लोके ख्यातिमुपेतस्य मङ्खकस्य काव्यशास्त्राचार्यतया प्रसिद्धिर्विद्वत्सु नैव प्रचारमाप्ता। राजतरङ्गिण्यां त्वयं केवलं कश्मीराधिपस्य जयसिंहस्यामात्यरूपतया ( ११२८-११४९ खी० ) प्रसङ्गादुपवर्णितः।

प्राक्तनानाम् अनूनकानां काव्यशास्त्रीयसिद्धान्तानां संक्षेपेण समुपन्यसनमाचार्य-रुय्यकस्य शैली। तस्याः स्वगुरोः शैल्याः प्रभावो मङ्खके सुस्पष्टमनुभूयत इह साहित्य-मीमांसायाम्। किन्तु बहुत्र पूर्ववर्तिनामाचार्याणामनुल्लेखपूर्वकं तत्सिद्धान्तसमासोपन्यासो जिज्ञासूनां महतेऽसौविध्याय जायते। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्यानुसन्धान-संस्थानेन प्रकाशमानीयमानाया अस्याः सम्पादकप्रवरैः श्रीगौरीनाथशास्त्रिभट्टाचार्य-महोदयैः पूर्ववर्तीनि निखिलानि काव्यशास्त्राणि निर्मथ्य पूर्ववर्तिनामाचार्याणां मतानि पादटिप्पणीषु परिशिष्टे च जिज्ञासूनामुपकाराय समावेशितानि, ग्रन्थत्रुटिता अंशा यथायथमभ्यूहिताः, लक्षणोदाहरणेषु लक्ष्योदाहरणेषु च हस्तलेखद्वयपाठाधारेण पूर्व-वर्तिनां ग्रन्थानामनुशीलनेन च सङ्गतये भृशं सञ्चेष्टितम्, ग्रन्थान्ते विविधानि परि-शिष्टानि च संयोजितानीति संस्करणमिदं समजनि परमोपयोगि। ग्रन्थस्यास्य प्रकाशनेन जिज्ञासवो नूनमुपकृता विद्वज्जनाश्च प्रीणिता इति बाढं प्रत्येति

संपूर्णानन्दसंस्कृत-
विश्वविद्यालये
व्यासपूर्णिमायाम् २०४०वै०
( २४-७-८३ खी० )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

काव्यशास्त्रगगनदिवाकरस्य मम्मटाचार्यस्य काव्यप्रकाशमप्रकाशितया विस्तारिकाख्यया व्याख्यया समलङ्कृतं सम्पादयतो मे मानसेन तत्परवर्तिनां काश्मीरिकाणां काव्यशास्त्राचार्याणां विषये जिज्ञासितम्। महती परम्परा खलु विद्योतते काश्मीरिकाणामाचार्याणामानन्दवर्धनरुद्रटाभिनवगुप्तमम्मटप्रभृतीनां काव्यशास्त्रे। अनुमम्मटमलङ्कारसर्वस्वं प्राणैषीद् रुय्यकोऽपि काश्मीरिको द्वादशख्रीस्तशताब्द्याः पूर्वार्द्धे। अलङ्कारसर्वस्ववृत्तौ 'एषा च समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्त्तिके साहित्यमीमांसायाञ्च तेषु तेषु प्रदेशेषूदाहृता" इति पङ्क्तिमधीत्य रुय्यकेणापरमपि साहित्यमीमांसाख्यं शास्त्रं विभावितमासीदिति स्वान्तनिशान्ते विचारसञ्चारैः प्राचरत्। साहित्यमीमांसायामनुशीलितायां सत्यां पुष्पिकयोः क्वापि प्रणायकनामधामादिपरिचयानवाप्तौ नैराश्यमेवाधिगतम्। अलङ्कारसर्वस्ववृत्तौ मङ्खकप्रणीतं श्रीकण्ठचरितमुद्धृतमालोक्य श्रीकण्ठचरिते च मङ्खकेन राजानकरुय्यकं गुरुत्वेन संस्मृतमधीत्य सन्देहदोलाधिरूढोऽभूवं कथं गुरुशिष्यौ परस्परमन्वस्मार्ष्टामिति। त्रयोदशख्रीस्तशताब्दीकेनालङ्कारसर्वस्वटीकाकारेण समुद्रबन्धुना स्वटीकायामलङ्कारसर्वस्ववृत्तिकृन्मङ्खको निरदेशीति निभाल्य साहित्यमीमांसाप्रणेतृत्वविषये किमपि रहस्यसूत्रं हस्तेकृतमिवानुभूतं मया। यद्यप्यलङ्कारसर्वस्वस्य कारिका एव काश्मीरिकेण राजानकरुय्यकेण प्रणीतास्तथापि तद्वृत्तिः श्रीकण्ठचरितरचयित्रा समकालिकेन राजानकरुय्यकप्रियशिष्येण मङ्खकेनैव समुपनिबद्धा। परं तत्र मङ्खकनामनिर्देशाभावात् पण्डितमण्डल्यां सवृत्त्यलङ्कारसर्वस्वं रुय्यकरचितमेव प्रथते। यद्यप्येवमेव मङ्खकः स्वकृतायां व्यक्तिविवेकव्याख्यायामपि क्वापि स्वकर्तृत्वं नोल्लिखति, तथापि मध्येग्रन्थम् "अस्य विधेयाविमर्शस्यानन्तेतरप्रसिद्धलक्ष्यपातित्वेनास्माभिर्नाटकमीमांसायां साहित्यमीमांसायाञ्च तेषु तेषु स्थानेषु

प्रपञ्चः प्रदर्शित इति ग्रन्थविस्तरभयादित एवोपरम्यते" इति साहित्यमीमांसानामग्रहण-दर्शनेन तस्या अपि तत्कर्तृत्वमेवाभ्युपेयते ।

राजानकरुय्यकशिष्यः काश्मीरिक आचार्यमङ्खकः काव्यरूपलक्ष्यस्य तत्परीक्षा-निकषस्य लक्षणस्य च प्रणेता काश्मीरिकं क्षेमेन्द्रमनुकुरुते । पितुर्निर्देशेन मङ्खकः श्रीकण्ठचरिताख्यं महाकाव्यं प्राणैषीदित्यसौ महाकविरप्यासीत् । निर्दुष्टं काव्यात्मकं कविकर्म नाक्लिष्टम् । सर्वविधदोषवैधुर्यमातनुते परकीयाणामात्मनीनानाञ्च दोषाणामुद्भावयितेति दोषज्ञोऽपरपर्यायः कवेः । तादृशेन निष्कल्मषेण काव्येन रसिको लोके सुखमत्यन्तमश्नुते । तदुक्तं साहित्यमीमांसायाम् ( का० २ )—

साहित्यं सपरिष्कारं कविना परिकल्पितम् ।
भावयन् रसिको लोके सुखमत्यन्तमश्नुते ।। इति ।

कविताgुणदोषपरीक्षानिकषमलङ्कारशास्त्रं काव्यशास्त्रं साहित्यशास्त्रं वा समाख्यायते । सिद्धहस्तः कविः कविताया उत्कृष्टतां निकृष्टतां गुणान् उताहो दोषान् सम्यक् परिचेतुं पारयति । साहित्यस्य परिष्कारः पारम्पर्येण प्रसिध्यति ( का० ३५ )—

समुदायपरिष्कारः समुदायिपरिष्कृतेः ।
साप्याधारपरिष्कारादित्यायाता परम्परा ।। इति ।

साहित्यमनीषिणो भोजराजादयः शब्दार्थयोर्द्वादशविधः सम्बन्धः साहित्यमित्या-चक्षते । यद्यपि दण्डिनः ( ६७५ ई० ) काव्यादर्शे, वामनस्य ( ८०० ई० ) काव्या-लङ्कारसूत्रवृत्तौ, भोजराजस्य ( १०१८–५६ ई० ) शृङ्गारप्रकाशे, मम्मटस्य (१०७५ ई०) काव्यप्रकाशे, राजानकरुय्यकस्य चालङ्कारसर्वस्वे काव्यालङ्कारशब्दौ क्वचिद् यौगपद्येन क्वचिच्च वैकल्येन प्रयुक्तौ दृश्येते काव्यपरीक्षानिकषपरौ, तथापि मङ्खकः शब्दार्थयोः सम्यक्प्रयोगरूपसाहितीमनुस्मरन् 'साहित्यमीमांसा' इत्यत्र ग्रन्थनाम्नि साहित्यशब्दमेव प्रायुङ्क्त । तेन साहित्यमीमांसायां काव्यसाहित्यशब्दौ विवरीतौ ( का० ४५, ४६ )—

शब्दार्थयोः सहस्थानं साहित्यमपरे विदुः।
तथा परस्परस्पर्धायुक्तयोः काव्यसंस्थितिम् ॥
एतन्मतमपि प्रायो मतमस्माकमश्नुते।
अभेदः ख्याप्यते तत्र किन्तु साहित्यकाव्ययोः ॥ इति।

एतस्मिन् विषये साहित्यमीमांसाया अस्या द्वितीयं प्रकरणं परामर्शनीयतामर्हति। प्राक्तनसमग्रलक्षणवाङ्मयपर्यालोडनपूर्वकं मङ्खकेन व्यरचि साहित्यमीमांसा नामालङ्कारग्रन्थः। तत्र भागद्वयं कारिकात्मको भागो वृत्त्यात्मकश्च। यद्यपि सर्वाः कारिकास्तत्प्रणीता एव विराजन्ते, तथापि भोजराजकृतसरस्वतीकण्ठाभरणस्य भूयस्यः कारिका मङ्खकेन साहित्यमीमांसायां यथास्थानं सन्निवेशिताः सन्ति। ततः परं श्रृङ्गारप्रकाशकाव्यादर्शवक्रोक्तिजीवितदशरूपकप्रभृतिग्रन्थानामपि काश्चन कारिका मङ्खकेनेह संगृहीता विलोक्यन्ते। षष्ठे परिशिष्टे तासां विवरणिकायां जिज्ञासुभिः कात्स्न्र्येन विज्ञातव्यम्। वृत्तिभागस्तावत् काव्यग्रन्थानतिरिच्य व्याकरणन्यायमीमांसादिविषयकाणां ग्रन्थानामुदाहरणवचोभिः समुद्भासते। इह संस्करणे चतुर्थपरिशिष्टे साहित्यमीमांसोद्धृतानामपूर्णानां श्लोकानां पूर्त्यै सच्चेष्टितम् आकरग्रन्थसङ्केतपूर्वकम्। द्वितीये परिशिष्टे तु साहित्यमीमांसोद्धृतश्लोकानुक्रमणिकायामाकरग्रन्थसङ्केता विन्यस्ताः सन्ति। एवमेवात्र वृत्तावुद्धृतानां गाथानां गद्यांशानां वाक्यानां परिशिष्टानि गवेषकजिज्ञासुजनहितकामनयाऽऽकरग्रन्थनिर्देशपूर्वकं संयोजितानि सन्ति। मङ्खकस्य साहित्यशास्त्रीयं ज्ञानमतीव विस्तृतमासीदिति तत्प्रयुक्तोदाहरणादिभिस्तदीयविषयविवेचनपाटवेन च विज्ञायते।

गवेषणादिङ्निर्देशमर्मज्ञस्यानुसन्धानसंस्थाननिदेशकस्य वागीशशास्त्रीत्युपनामधेयस्य डॉ० भागीरथप्रसादत्रिपाठिमहाभागस्यानुरोधेन वाराणस्यां प्राप्तं हस्तलेखमाधारीकृत्य मयेह सम्पादनकर्मणि प्रवृत्तम्। एष हस्तलेखः 'क० पु०' नाम्ना स्मृतो वेदितव्यः। ख० पु० इत्याख्यः संकेतः खलु तञ्जापुरीयहस्तलेखस्य, ग० पु० सङ्केतश्च त्रिवेन्द्रात् प्रकाशितस्य मुद्रितग्रन्थस्य विज्ञातव्यः। आसु सर्वास्वेव मातृकासु पाठानां

स्थाने स्थाने प्रायस्त्रुटितत्वादुद्धरणानाञ्चायथालिखितत्वादस्य सम्पादनकार्ये महद्सौविध्यमनुभूतम् । पादटिप्पणीषु विमृष्टा युक्ताः पाठा विन्यस्ताः, उद्धरणानां च यथायथसङ्गतिः सञ्चेष्टिता । इह दिशि श्रीवागीशशास्त्रिनिर्दिष्टेन श्रीपरमेश्वरपाण्डेयेनानुसन्धानाधिकारिणा महत्साहाय्यमाचरितमिति तमाशीराशिभिः संयुनक्ति-

वसन्तपञ्चम्यां
वाराणस्याम्
२०४० वै० (७-२-८४ खी० भौमे)

श्रीगौरीनाथशास्त्री

# विषयानुक्रमणी

## दोषनिरूपणं नाम तृतीयं प्रकरणम् २१-२४



## गुणनिरूपणं नाम चतुर्थं प्रकरणम् २७-४०

## विविधकाव्याङ्गनिरूपणं नाम सप्तमं प्रकरणम् १३७-१८२

# सङ्केतसूची

अ० = अध्यायः
अभि० भा० = अभिनवभारती
अभि० शा० = अभिज्ञानशाकुन्तलम्
अम० श० = अमरुशतकम्
उ० का० सा० स० = उद्भटकाव्यालङ्कार-सारसङ्ग्रहः
उदा० श्लो० = उदाहरणश्लोकः
उ० रा० च० = उत्तररामचरितम्
औ० वि० च० = औचित्यविचारचर्चा
का० = कारिका
का० प्रका० = काव्यप्रकाशः
का० मी० = काव्यमीमांसा
का० सू० = कामसूत्रम्
काव्याद० = काव्यादर्शः
किराता० = किरातार्जुनीयम्
कु० स० = कुमारसम्भवमहाकाव्यम्
कुमा० स० = कुमारसम्भवमहाकाव्यम्
गा० स० श० = गाथासप्तशती
गौ० न्या० सू० = गौतमन्यायसूत्रम्
त० वा० = तन्त्रवार्तिकम्
दशरू० = दशरूपकम्
द्वि० भा० = द्वितीयभागः
ध्वन्या० प्र० उ० = ध्वन्यालोकः, प्रथम उद्द्योतः
ध्वन्या० लो० लो० वृ० = ध्वन्यालोक-लोचनवृत्तिः
ना० शा० = नाट्यशास्त्रम्
पा० = पादः
पा० अ० = पाणिन्यष्टाध्यायी
पू० मे० = पूर्वमेघः
पृ० = पृष्ठम्
प्रतिहारेन्दु० ल० वृ० = प्रतिहारेन्दु-राजलघुवृत्तिः
बा० रा० = बालरामायणम्
भट्टिका० = भट्टिकाव्यम्
भ० ना० शा० = भरतनाट्यशास्त्रम्
भल्ल० श० = भल्लटशतकम्
भामहकाव्या० = भामहकाव्यालङ्कारः
महाना० = महानाटकम्
महाभा०शा०प० = महाभारतम्, शान्तिपर्व
म० वी० च० = महावीरचरितम्
महावीर० = महावीरचरितम्
मा० मा० = मालतीमाधवनाटकम्
मा० मि० = मालविकाग्निमित्रम्
मृच्छक० = मृच्छकटिकम्
मे० दू० = मेघदूतम्

मैत्र्यु० = मैत्र्युपनिषद्
रत्ना० = रत्नावली
र० वु० = रघुवंशकाव्यम्
रघु० महा० = रघुवंशमहाकाव्यम्
रु० काव्या० = रुद्रटकाव्यालङ्कारः
रुद्र० का० = रुद्रटकाव्यालङ्कारः
रुद्रटाल० = रुद्रटालङ्कारः
व० जी० = वक्रोक्तिजीवितम्
वा० = वार्त्तिकम्
वा० का० सू० वृ० = वामन-काव्यालङ्कार-सूत्रवृत्तिः
वा० रा० = वाल्मीकिरामायणम्
विक्र० व० = विक्रमोर्वशीयम्
विक्रमोर्व० = विक्रमोर्वशीयम्
विद्धशा० भ० = विद्धशालभञ्जिका
वे० सं० = वेणीसंहारनाटकम्
वे० स० ना० = वेणीसंहारनाटकम्
शा० भा० = शाबरभाष्यम्
शि० व० = शिशुपालवधकाव्यम्
शि० सू० वा० = शिवसूत्रम्, वार्त्तिकम्
शृङ्गारति० = शृङ्गारतिलकम्
शृ० प्र० = शृङ्गारप्रकाशः
शृङ्गा० श० = शृङ्गारशतकम्
स० क० = सरस्वतीकण्ठाभरणम्
सू० = सूत्रम्
सदु० कर्णा० = सदुक्तिकर्णामृतम्
सु० भा० र० = सुभाषितरत्नभाण्डागारः
सुभाषिता० = सुभाषितावलिः
से० ब० = सेतुबन्धमहाकाव्यम्
हनु० ना० = हनुमन्नाटकम्



समस्तवृत्तानि विना न येन
पद्मोद्भव - श्रोत्र - रसायनेन ।
छन्दांसि यस्मात् प्रभवन्ति वन्दे
तं वाङ्मयं रूपमिहाष्टमूर्तेः ॥

(अभिनवभारती)

॥ श्रीः ॥

महाकविमङ्खकप्रणीता

# साहित्यमीमांसा

## प्रथमं प्रकरणम्

[1]प्रारिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्तये विषयप्रयोजनसम्बन्धान् सूचयन् प्रथममिष्टदेवतावन्दनं करोति—

**निदानं जगतां वन्दे वस्तुनी वाच्यवाचके।**
**ययोः साहित्यवैचित्र्यात् सतां रसविभूतयः॥ इति ॥१॥**

वाच्यवाचके वस्तुनी नाम परापरे वेद्यवेदके ब्रह्मणी। अत्र परापरब्रह्मपारम्पर्या[2]नुभवलभ्यनिरतिशयसुखवत् तदवस्थाविशेषभूतशब्दार्थसाहित्यवैचित्र्यभावनाविशेषेण सतां हृदि ( रसो ) निरतिशयो जायेतेति[3]।

परत्र ल(क्षी ? क्षयि)ष्यमाणान् परार्थानभिलक्ष्य[4] सूचय(न् अभिधेया)दीन् प्रकटयति—

**साहित्यं सपरिष्कारं कविना परिकल्पितम्।**
**भावयन् रसिको लोके सुखमत्यन्तमश्नुते॥ २॥**

साहित्य( म )भिधेयम्। सत्सुखोदयः फलम्। ( प्रतिपाद्य )प्रतिपादकभावः सम्बन्धः। फलेन तु कार्यकारणभावश्च सम्बन्ध इति। अस्य लक्षणग्रन्थस्य लक्ष्यद्वारा फलं प्रति कारणत्वम्। अत्र प्रमाणमन्वयव्यतिरेकेण सपरिष्कारमित्यादिना वैचित्र्यस्वरूपमुच्यते। साहित्यमेवंविशेषतया। शास्त्राख्यानाभ्यासर( सो ? सौ )ष्ठिको विशेषः कथ्यते।

---

१. आरिप्सितस्य—इति ग० पु० पाठः।
२. पारम्पर्यां—इति ग० पु० पाठः।
३. सूत्रितम्—इति ग० पु० अधिकम्।
४. लक्ष्यं—इति ग० पु० पाठः।

प्रकृतमानुपूर्व्या लक्ष्यते—

**वृत्त्यादीनां समष्टिः स्यात् साहित्यं तत्परिष्कृतिः ।**
**शब्दार्थयोः परिष्कारः कविस्तस्य प्रसाधकः ॥ ३ ॥**
**सामाजिकः स्याद् रसिकः प्रसिद्धं लोकतः सुखम् ।**

अनुकूलवेदनीयं सुखमिति लोकत एव सिद्धमिति या(व)त् ।

वृत्त्यादीनां सङ्ख्या निर्दिशति—

**अष्टौ वृत्त्यादयस्तत्र परिष्कारश्चतुर्विधः ॥ ४ ॥**
**चतुर्विधः परिष्कर्ता रसिकस्त्रिविधो मतः ।**

सङ्ख्येयानां स्वरूपविशेषान् विभज्य प्रदर्शयति—

**वृत्तिर्विवक्षा तात्पर्यं प्रविभागो व्यपेक्षणम् ॥ ५ ॥**
**सामर्थ्यमन्वयैकार्थ्ये अष्टौ वृत्त्यादयः स्मृताः ।**
**दोषत्यागो गुणाधानमलङ्कारो रसान्वयः ॥ ६ ॥**
**इत्थं चतुर्विधा क्लृप्ता साहित्यस्य परिष्कृतिः ।**
**सत्कविः प्रथमस्तत्र विदग्धस्तदनन्तरः ॥ ७ ॥**
**[1]आरोचकी ततः पश्चात् सतृणाभ्यवहारकः ।**
**कवींश्चतुर्विधानाहुरिति साहित्यवेदिनः ॥ ८ ॥**
**उत्तमाधममध्यत्वात् त्रिविधो रसिकः स्मृतः ।**

॥ इति प्रथमं प्रकरणम् ॥

---

१. अरोचकी—इति ग० पु० पाठः ।

## अथ द्वितीयं प्रकरणम्

अथ वृत्तिं लक्षयति—

वृत्तिः पदानां व्यापारः पदार्थप्रतिपादने ॥ ९ ॥
सा मुख्या लक्षणा गौणीत्येवं त्रैविध्यमास्थिता ।

भेदलक्षणम्—

अर्थमव्यवधानेन स्पृशन्ती मुखवर्तिनी ॥१०॥
मुख्या वृत्तिर्वदन्त्येनामभिधेति विपश्चितः ।

लक्ष्यलक्षणार्थमव्यवधानेन स्पृशन्तीति मुखवर्तिनी मुख्येति नामनिर्वचनम् ।

यथा—

प्रस(न्ना ? न्नाः) कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ १ ॥

अत्र स्त्रीवागादिशब्दा मुख्याः ।

अभिधेयाविनाभूतं स्पृशन्ती लक्षणोच्यते ।

यथा—

"मतनालीदलपाकपाण्डुवदनम्" इति ।

अत्र पाकस्य क्रियात्वेनामूर्तत्वात् पाण्डुत्वं न भव(ती)ति तत्समीपस्थं पाकवद् द्रव्यं लक्षयति ।

यथा वा—

अयि पान्थ विलम्बसे किमेकः सहसा बालवनावितः प्रयाहि ।
कुसुमायुधमाह्वयन्निवोच्चैः सहकारः कुरुते कुहूरुतानि ॥ २ ॥

अ(स्य ? त्र) वृक्षस्य कुहू(का ? क)रणासम्भवात् सहकारशब्दस्तत्स्थं कोकिलं लक्षयति ।

स्पृशत्यर्थान्तरं गौणी लक्ष्यमाणगुणान्वयात् ॥ ११ ॥

यथा—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ॥ ३ ॥

इत्यादिः ।

अत्र रामणीयकादिगुणयोगाल्लक्ष्म्यादिशब्दाः सीतायां गौणाः ।

व्यवधानेऽपि शब्दस्यैव शक्तिरङ्गीकर्तव्येत्याह्—

**वृत्तिः कार्यवशादेवं कक्ष्यात्रितयचारिणी ।**

यथा प्रथमप(र्वा ? वे)ऽपि प्रतिपत्तिदर्शनाच्छक्तिरङ्गीक्रियते, एवं द्वितीयतृतीययोरपि कार्यवशात् स्वीकर्तव्येत्यर्थः ।

वृत्तित्रयस्यापि पदशक्तित्वे कथं द्वयोरेव पदान्तर( स )मभिव्याहारापेक्षा नैकस्या इत्यत आह—

**केवलस्याप्रयोगित्वात् पदस्यार्थनिरूपकैः ॥१२॥**
**एतद् वृत्तित्रयं वाक्यकाल एव निरूप्यते ।**

केवलपदप्रयोगाभावाद् वृत्तित्रयस्यापि वाक्यकाल एव व्युत्पत्तिः ; तथाहि 'गङ्गा प्रवहति, गङ्गायां घोषः प्रतिवसति, गङ्गेयं कावेरी' इत्यादिष्वेकतरपदसमभि( व्यव ? व्या )हारैरेव वाक्यार्थविशेषौपयिकवृत्तिविशेषस्थापनम् ।

अभिधाया इतरयोश्चेतद्वस्तुविशेष इत्याह—

**[1]कृताभिधा निराकाङ्क्षा मुख्यार्थस्पर्शपूर्विका ॥ १३ ॥**
**पदान्तरान्वयवशात् तदर्थानुपपत्तितः ।**
**वृत्ती जघन्ये उन्नेये तत्र तत्रोपयोगतः ॥ १४ ॥**

निराकाङ्क्षा इतरवृत्तिस्पर्शपूर्विका न भवतीत्यर्थः ।

वृत्तीनामधिकसङ्ख्यानिराकरणार्थमाह्—

**तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः ।**
**वृत्तिः [2]परत्र शब्दस्य प्रवृत्तिर्जैमिनीरिता ॥ १५ ॥**
**वृत्तिर्याप्यक्षपादोक्ता साहचर्यादिहेतुका ।**
**वृत्त्योर्जघन्ययोरन्तर्द्रष्टव्या सकलापि सा ॥ १६ ॥**

जैमिनीरिता तत्सिद्ध्यादिभिः परत्र शब्दप्रवृत्तिः 'यजमानः प्रस्तरः', 'अग्निर्वै ब्राह्मणः', 'आदित्यो यूपः', '(अ) पशवोऽन्ये गो-अश्वेभ्यः', 'पशवो गो-अश्वाः', 'प्राणभृत उपदधाति', 'सृष्टीरुपदधाति' इत्यादिषु यथाप्रयोगं द्रष्टव्या ।

---

१. तत्राभिधा—इति ख० पु० पाठः ।
२. परतः पर—इति ख० पु० पाठः ।

अक्षपादोक्तापि सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यः परत्र परशब्दस्य प्रवृत्तिः 'यष्टिकां भोजय', 'मञ्चाः क्रोशन्ति', 'कटं करोति', 'यमो राजा', 'आढकं सक्तवः', 'तुला चन्दनम्', 'गङ्गायां गावश्चरन्ति', 'कृष्णः शाटकः', 'अन्नं प्राणाः', 'नृपोऽयं पुरुषः' इत्यादिषु यथाक्रमं द्रष्टव्या। एषा सर्वापि गौणलक्षणयो-रन्तर्भूता।

अथ विवक्षा—

विवक्षा वक्तुमिच्छा स्यात् समसङ्क्षिप्तविस्तृतैः।
शब्दैरर्थस्य

स (मा) यथा—

क्षात्मेन्दुवह्निमरुदर्कमहीपयांसि यन्मूर्तयः स भगवानभिरक्षतु त्वाम्।

सङ्क्षिप्ता यथा—

स पातु वः पुण्य (मन्ते वृतान्यामा ? वन्तौ भूतान्यात्मा) च यद्वपुः ॥४॥

विस्तृता यथा—'या सृष्टिः स्रष्टुराद्या' इति।

पुरुषाश्रयत्वेऽपीच्छायाः शब्दप्रवृत्तिकारणत्वात् तद्गतत्वं कथयति—

तत्पूर्वं लोके शब्दप्रवर्तनम् ॥ १७ ॥

कर्मप्रधानत्वाच्चेच्छायास्तद्गतत्वम्। यथा—'घटज्ञानम्, पटज्ञानम्' इति।

विवक्षायाः पुनरपि प्रकारभेदमाह—

विवक्षा बहुधा [1]वात्र भेदाभेदादिगोचरा।

भेदाभेदविवक्षा यथा—

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात् स्वाद् बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ५ ॥

आदिशब्देनान्यच्च विवक्षावैचित्र्यं यथायोगं द्रष्टव्यम्।

अथ [2]वाक्यार्थतात्पर्यमभिधीयते वाक्यस्य तद्भेदमाह—

तच्च वाक्यार्थत्रैविध्यात् त्रिविधं मतम् ॥ इति ॥ १८ ॥

तथाहि वाक्यार्थः कदाचित् प्रथमे (व ?) पर्वणि कदाचिद् द्वितीये, कदाचित् तृतीये। यथा—नद्यास्तीरे फलानि सन्ति, विषं भुङ्क्ष्व, निमिषत्येवेति। तत्र प्रथमपर्वणि

---

१. बहुधाप्यत्र—इति ख० पु० पाठः।
२. वाक्यार्थप्रतिक्षेपत्वं तात्पर्यं—इति ख० पु० पाठः।

तात्पर्यं विधिनिषेधानुभयात् त्रिविधम् । प्रसिद्धत्वान्नो दाहियते । प्रथमपर्तादिर्लङ्घिततात्पर्यं विधिनिषेधानुभयद्वारा त्रिविधम् ।

विधिनिषेधानुभयविषयं नवधा भिद्यते । तत्र विधिद्वारं विधिविषयं यथा—

उव णिच्चलणिप्फन्दा विसिणीपत्तम्मि रेहइ मलाआ ।
णिम्मलमरगअभाअणपडिट्ठिआ संङ्खसिप्पिव्व ॥ ६ ॥

विधिद्वारं निषेधविषयं यथा—

रक्खामि सुणअ भेणं अत्ता णिधेहि खाणफाणेहि ।
बंकइ तिणेपिलिए रत्तिअलिल्लव्विअसुवंतो ॥ ७ ॥

विधिद्वारमनुभ( व ? य )विषयं यथा—

सीकरिअमणिअमुहवेविअइ थुआहत्थसिजिएव्वाइं ।
सिखेन्नु बो बुहीओ किसुमहि तुह्मं पआसेण ॥ ८ ॥

यद्वा –

अधिदिनावधिजीवाः प्रसीद जीव पथिकजनजायाः ।
दुर्लङ्घ्यवत्मशैलौ स्तनौ पिधेहि प्रपापालि ॥ ९ ॥

निषेधद्वारं विधिविषयं यथा—

एत्थ णिसज्जइ अत्था एत्थ अहं [1]एत्थ परिअणो सअलो ।
पंथअ राईअन्धअ मा मह सअजे णिसिज्जिहिसि ॥ १० ॥

निषेधद्वारं निषेधविषयं यथा—

आदिअं अणएण गच्छसि इं रमसुअ सहणहि[2] रकिखज्जइ ।
.... .... .... गहवलभच्छती ॥ ११ ॥

निषेधद्वारमनुभ( व ? य )विषयं यथा—

देआ पहिअ णि अत्तसु मुहससिजोह्लाविलुत्ततमम्मणिवहे ।
अहिसारिआण विग्घं करेहि अण्णाणमिहआसे ॥ १२ ॥

यद्वा—

पद्मातपत्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति तवैव मुखस्य लक्ष्मीम् ॥ १३ ॥

---

१. एत्थं—इति क० पु० पाठः ।
२. तहणह्मि—इति ग० पु० पाठः ।

अनुभयद्वारं विधिविषयं यथा—

मह् एहि किंव पन्थअ जइ रहसि णिअसणं णिअं वा।
[1]ओद्दोसाहेमिकस्सरण्णे गामो दूदुं अहं एक्का॥ १४॥

अनुभयद्वारं निषेधविषयं यथा—

अत्ता तह रमणिज्जह्मं गामस्स मंडणअभूदं।
लुअतिलवाडीसरिच्छं सिसिरेण कअं वि सिणिसंडं॥ १५॥

अनुभयद्वारमनुभयविषयं यथा—

पिअदंसणसुहरसमेउलिआइ जइ सेणहोंति णअणम्।
ता केण कण्णलइअं लक्खिज्जइ कुवलअं तिस्सा॥ १६॥

यद्वा—

अस्ति विशेषः सुमहाकुञ्जा वृन्दावने मया दृष्टाः।
लू(ला ? ता) तन्तुच्छन्ना यमुनातीरे लतागृहोपान्ताः॥ १७॥

एवमेकविंशतिगाथानुपर्यन्तनुभयद्वारकमपि त्रयं विद्यत इति केचित्। तत्र विधिनिषेधद्वारकं विधिविषयं यथा—

णि अवह दंसणक्खितपम्महिअअण्णेण मच्छसुवहेण।
गहवइधू आ दुल्लंघमा उरा इह अअं गामे॥ १८॥

विधिनिषेधद्वारकं[2] विधिविषयं यथा—

उच्चिण सुपडिअ कुसुमं माधुण सेहालिआहलिअ सोह्ने[3]।
अहदेविसमविरावो स सुरेण सुओ वलअसद्दो॥ १९॥

विधिनिषेधद्वारमनुभयविषयं यथा—

सणिअं वच्चकिसोअरिमामावेएण वासुमईपट्ठे।
भंजिहि सिविरिथ एत्थणिमिहिणकिज्जेणिम्मणिआ॥ २०॥

यद्वा—

मन्दं निधेहि चरणे परिधे (हि) नील
वासः पिधेहि वलयावलिमञ्चलेन।
मा जल्प साहसिनि शारद(चन्द्रिकायां ? चन्द्रकान्त)-
दन्तांशवस्तव तमांसि समापयन्ति॥ २१॥

---

१. ओद्धो—इति क० पु० पाठः।
२. द्वारेकं—इति क० पु० पाठः।
३. सोह्ने—इति ग० पु० पाठः।

एतत् त्रयमपि विधिनिषेधद्वारयोरन्तर्भूतम्। अथवैतत्सङ्करीत्या अन्येऽपि बहवः प्रभेदा यथाप्रयोगं द्रष्टव्याः। एकस्य तात्पर्यस्योभयविषयत्वं न सम्भवति, भवति चेत् तात्पर्यमेव भिद्येत। तस्मादुभयविषयत्वं नोदाहृतम्।

प्रसङ्गाद् वाक्यवाक्यार्थयोर्लक्षणमाह—

**संहत्यार्थाभिधायीनि पदान्याहुर्विपश्चितः।**
**वाक्यं विशिष्टा वाक्यार्थः क्रिया सर्वत्र कारकैः॥ १९॥**

विपश्चितो भाष्यकारादयः। 'संहत्यार्थमभिदधति पदानि वाक्यम्' इति भाष्यकृतः। क्रिया सर्वत्रेति प्राचुर्यविवक्षया, अन्यथापि वाक्यार्थविषयस्येष्टत्वात्।

तदेव प्रकटयति—

**नीलमुत्पलमित्यादावपि वाक्यार्थदर्शनात्।**
**क्रियाकारकनिर्बन्धमाद्रियन्ते न केचन॥ २०॥**

तस्मादनुवृत्तं लक्षणमाह—

**वर्तते यत्परः स शब्दार्थ इति स्थितिः।**
**एतद् रसस्य प्रस्तावे परस्तात् साधयिष्यते॥ २१॥**

तद्भेदप्रदर्शनम्—

**कक्ष्यात्रैविध्यतस्तस्य त्रैविध्यमपि सम्मतम्।**

अथ प्रविभागः—

**एतावतोऽर्थभागस्य स्यादियाञ्छब्द इत्ययम्॥ २२॥**
**प्रविभागः पदे वाक्ये महावाक्ये प्रतिष्ठितः।**
**अन्वयव्यतिरेकाभ्यां शक्तिनिष्कर्ष एव सः॥ २३॥**

गौरिति पदे प्रकृत्यंशस्य सास्नादिमानर्थः प्रत्ययांशस्यैकत्वमित्ययमौ गावावित्यत्रान्वयव्यतिरेकाभ्यां गौरानीयतामिति वाक्ये कारकपदस्यायमर्थः क्रियापदस्यायमर्थ इत्ययश्च आनीयतां गौर्बध्यतामित्यत्रान्वयव्यतिरेकाभ्यां निश्चीयते। एवं महावाक्यरूपेऽपि प्रबन्धेऽपि द्रष्टव्यम्।

ननु काममावापोद्धारवद् वाक्येषु तेषु तेष्वन्वयव्यतिरेकानुसन्धायिना पुंसा शब्दानामंशशोऽर्थाः प्रविभाज्यन्ताम्, कामं तैस्तैरंशैस्ते तेऽप्यर्थाः प्रतिपाद्यन्ताम्। कथं पुनर्लुप्तप्रकृतिप्रत्ययोभयेषु तदर्थावगतिः? यथा इत्यत्रार्थस्यार्थस्य दशीत्यत्र

सों वाचि क्षडि कापीत्यत्राग्निरङ्गुल्योः । किमत्रानुपपन्नम् ? प्रमाणनिश्चितार्थाः केचिदमी खण्डशब्दाः । लोपोऽपि नामात्र गतार्थत्वादप्रयोग एव । स्यादेतत् । बाढमुभयत्रैवं भवतु । द्व्यादिषु कथम् ? बहुत्वप्रमाणतः । स्वादीनामेवैकत्वादीनि निश्चितानि । कुतस्त( दा ? दभा )वे तत्प्रतीतिरिति चेत्, सम्भवान्वयव्यतिरेकावेव वात्रापि शब्दकरणम् । यथैकद्विबहुषु । किञ्च पञ्चकप्रातिपदिकार्थपक्षोऽप्यङ्गीकृतः ।

**स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।**
**समवेतस्य तु वचने लिङ्गं सङ्ख्यां विभक्तिं च ॥** इति ।

अथवा काल्पनिकपक्षेऽपि तद्वदपाये मल्लिकापुष्पकुटजचम्पकपुटादिमद्वासनासंक्रान्तिरिति न दोषः । मल्लिकापुटादिषु परिमलवाहिनां पुष्पावयवानां सत्त्वाद्युक्त्या वासनोपलब्धिः । यथा तप्तकटाहादिषु दहनांशसम्भावनात् स्फोटकार्यसम्भवः ।

अत्र पुनर्लुप्तानां स्वादीनामवयव( सङ्ग ? सं )सर्गस्याविद्यमानत्वादुदाहरणवैषम्यमिति चेत्, तन्न, उदाहरणस्थलेष्वपि प्रमाणगौरवातिशयानुपलम्भादवयवान्तरसंसर्गसद्भावो न प्रामाणिकः । यद्वा, एतदभावप्रतियोगितया स्मर्यमाणाः स्वादय एव स्वार्थमभिद( धीयुः ? ध्युः ) । नन्वनुच्चार्य ( प्र ? ) माणस्य येन केनचिज्ज्ञातस्यापि शब्दस्यार्थाभिधायकत्वं शब्दसंज्ञास्वतिप्रसङ्गः । तथाहि—जगदित्युक्ते न तद्विशेषार्थावगतिः प्रसज्यत इति चेत्, न, सामान्यसंज्ञैषा । ततो न विशेषार्थावगतिः । विशेषसंज्ञायां व्युत्पन्नस्य विशेषावगमे न तदर्थज्ञानं नान्तरीयकम्, किन्तु तत्र तात्पर्याभावान्न कार्यमित्येतावत् ।

अथवा प्रतियोगिनिरूपणा( धीन )निरूपणस्वभावस्वाद्यभाव एव तदर्थाभिधायक इत्यन्वयव्यतिरेकाभ्यामवधार्यताम् । अभावोऽपि कार्यजनक इति सिद्धम् । "भावो यथा तथाभावकारणं कार्यवत् ततः" इति । अत एव ह्याचार्या भावादेशवदभावादेशेऽपि कार्यातिदेशस्य स्मरन्ति । अकाल्पनिकपक्षेऽपि दध्यादिशब्दोत्तरकाले शब्दाभावैकतादिवाचक इत्यन्वयव्यतिरेकायत्तमनुत्तरं दध्याद्येव तदर्थावाचकमिति विपर्ययेऽपि विशेषण एव तात्पर्यमित्येव भावस्यैव वाचकम् । दध्यत्रेति वाक्ये कथमुत्तरशब्दाभाव इति चेत्, न, प्रत्येकं पदानां निरूपणादस्मिन् मतेऽप्यस्त्येव पदवाक्यविभागः । शब्दाभावस्य वाचकत्वाच्छब्दत्वं चार्थस्याव्याहतम् । अभावस्य बोधकत्वं विना वाचकत्वमिति च युज्यते । काल्पनिकपक्षे पदसंस्कारवद् वाक्यसंस्कारेऽप्युत्तरास्वाद्यभावसम्भवात् तदर्थाभिधानमिति समञ्जसम् ।

अथ व्यपेक्षा—

**परस्परं पदार्थानामकाङ्क्षा स्याद् व्यपेक्षणम् ।**
**तत्राभिधानिकी नैयायिकी नैष( धी ? धकी ) च सा ॥२४॥**

तत्र श्रुतिसमाख्यावाक्यविकल्पसमुच्चया[१] (द ?) तिदेशा ( दि )भिर (न ? भि) धीयमाना आभिधानिकी। यथा—

> अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं
> साम्रेणाम्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ।
> उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
> सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥२२॥

इयं श्रुत्याभिधानिकी ।

ऊहविपर्ययविपरिणामाध्याहारवाक्यशेषव्यवहितकल्पनादिभिरुपकल्प्यमाना नैयायिकी[२] । यथा—कालिदासः 'किं कुन्तलेश्वरः करोति' इति विक्रमादित्येन ( स्पृ ? पृ)ष्ट उक्तवान्—

> असकलहसितत्वात् क्षालितानीव कान्त्या
> मुकुलितनयनत्वाद् व्यक्तकर्णोत्पलानि ।
> पिबति मधुसुगन्धीन्याननानि प्रियाणां
> त्वयि विनिहितभारः कुन्तलानामधीशः ॥ इति ॥२३॥

विक्रमादित्यः 'पिबतु मयि' इत्यूहयित्वा इदमेव पद्यमुत्तरं पपाठ। इयमूहतो नैयायिकी ।

> मूले कण्टकसन्ततिरुपचितविकचानि रक्तकुसुमानि ।
> एतावतैव शल्मलिरमुहरति न पङ्कजवनस्य ॥ २४ ॥

इयं वचनतो नैषधकी । अन्या अपि यथाप्रयोगमनुसन्धेयाः ।

**अथ सामर्थ्यम्**

> **सामर्थ्यं च पदार्थानां भवेत् सम्बन्धिरूपता ।**
> **भेदः संसर्ग उभयमित्येतत् त्रिविधं मतम् ॥ २५ ॥**

---

१. या—इति क० पु० नास्ति ।

समुच्चये । श्रुत्याभिधानिकीत्यादि प्रथमा परिकीर्तिता। ऊहोऽपि हि द्वितीया स्यात् तृतीयावचनादिभिः । ऊह—इति ख० पु० पाठः ।

२. नैयायिकी। वचनासम्भवविरोधकृतार्थत्वपरिशङ्कावधारणादिभिर्निर्णीयमाना नैषधकी। सामर्थ्य—इति ख० पु० पाठः ।

यदा राजभृत्य[१] इत्यादौ भृत्यशब्दो न स्वतन्त्रार्थवृत्तिः, तदा सामान्येन स्वामिसंसर्गस्यावगतत्वात् स्वामिविशेषज्ञापनायोपादीयमानो राजशब्द(स्य ? :) स्वाम्यन्त(रैभ्या ? रेभ्यो) भृत्यशब्दार्थं व्यावर्तयति। सोऽयमर्थान्तरव्यवच्छेदः श(ा)ब्दो भेदः। यदा राजपुरुष इत्यादावनवगतपरायत्तभावस्य पुरुषस्य स्वामिसम्बन्धद्योतनाय राजशब्दः प्रयुज्यते, तदापि विशेषसंसर्गस्याशब्दोपादानत्वादनवकाशो विशेषान्तरस (म्प ? म्पा)-तस्तदाप्यशब्दा स्वाम्यन्तरनिवृत्तिरर्थादवसीयते। सोऽयं विशेषः संसर्गः। य (था ? दा) 'नीलोत्पलम्' इत्यादावर्थान्तरनिवृत्तिरर्थान्तरसंसर्गश्च प्रतीयते, तदा भेदसंसर्गावित्युभयम्। नानयोः समप्रधानभावः, एकत्राभिरूपत्वादितरस्येति। यत्र न सम्बन्धयोग्यता, न तत्र सामर्थ्यमित्यर्थादापतित 'न कश्चित् पुरुषो व्याघ्रश्चरति पल्लीम्' इत्यादिषु। सम्बन्धो नामाहानिर्व्यपेक्षा व्यतिषङ्ग इति त्रयमपीष्टम्। नेह विस्तरभयात् प्रपञ्च्यते।

**बुद्धिस्थानां पदार्थानामाकाङ्क्षा भवतीति यत्।**
**प्रसिद्धः सन्निधिस्तेन व्यपेक्षाक्रोडगोचरः॥ २६॥**

निगदव्याख्यानमेतत्।

**परस्परस्य[२] ग्रथनं पदा(र्था)नामिहान्वयः।**
**स जायेत त्रिधा शक्तो[३] वैभक्त उभयात्मकः॥ २७॥**

तत्राख्यातसुब्विभक्तिभ्यां कर्तृकर्मणो (?) भिधाने शक्तो यथा—

**अध्यातामासुरुत्तुङ्गहेमपीठानि यान्यमी।**
**तैरूहे केसरिकान्तत्रिकूटशिखरोपमा॥ २५॥**

सम्बन्धविभक्त्या वैभक्तो यथा—

**यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः।**
**यस्यार्थः स पुमांल्लोके यस्यार्थः स च पण्डितः॥ २६॥**

उभयात्मकः शक्तिविभक्तिमयो यथा—

**इक्षुदण्डस्य मण्डस्य दध्नः पिष्टघृतस्य च।**
**वाराहस्य च मांसस्य सैष गच्छति फल्गुनः॥ २७॥**

---

१. राज्ञो भृत्य इत्यत्र भृत्योत्तरभेदः, राज्ञः पुरुष इत्यत्र पुरुषस्य राजसम्बन्धमात्रम्, नीलोत्पलमित्यत्र नीलेतरभेदो नैल्यसम्बन्धश्च प्रतीयते। एवं च 'सम्बन्धिरूपतः' इत्यत्र रूपपदं सामर्थ्यपरम्। ततः सम्बन्धिसामर्थ्याद् भेदसंसर्गोभयसिद्धिरित्यर्थः। सामर्थ्यं योग्यतेत्येवं पर्यायेणाभिधीयते। बुद्धिस्थाना—इति ख० पु० पाठः।

२. परस्परेण—इति ख० पु० पाठः।

३. शाक्तो—इति ख० पु० पाठः।

अथैकार्थीभावः—

**ततश्चैकत्वसम्पत्तिमेकार्थीभावनं[1] विदुः।**

ततश्चेति अपेक्षावतां समर्थानामन्वितानां च पदानामित्यर्थः।

एतद्विभागमाह—

**नीरक्षीरादिवत् क्वापि क्वचित् पांसूदकादिवत् ॥२८॥**

**तिलतण्डुलवत् क्वापि स्फुरन्त्यर्थाविरोधितः[2]।**

तद् यथाक्रमं पदवाक्यमहावाक्यविषयमेतत्।

केचि ( दे ? दै ) कार्थ्यस्य समासकृत्तद्धितविषयतां वर्णयन्तः पद एव स्थापयन्ति। तत्र केवलमैकपद्यमेव विशेषः, ऐकार्थ्यं तु पदवाक्यसाधारणमिति कथयन्ति।

**तेनैकार्थ्यवशीकारात् पदानामेकवाक्यता ॥२९॥**

अस्मिन्नर्थे प्रमाणं दर्शयति—

**अर्थैक्यादेकवाक्यत्वं पदानामाह जैमिनिः।**

"अर्थैकत्वादेकं[3] वाक्यं साकाङ्क्षं चेत्, विभागे[4] स्यात्" ( जै० सू०, अध्या० २, पा० १ सू० ४६ ) इति।

कथमनेकेषां पदार्थानामेकार्थत्वमित्यपेक्षायामाह—

**विशेषणैर्विशिष्टं सद् विशेष्यं ह्येकतामियात् ॥३०॥**

प्रसङ्गाद् विशेषणविशेष्यलक्षणमाह—

**भेद्यं विशेष्यं तत्राह भेदकं तद्विशेषणम्।**

**तटस्थं च हृ (द ? दि) स्थं च द्विधा तत्र विशेषणम् ॥३१॥**

**तटस्थं च व्यवच्छेत्तृ बहिष्ठं यद् विशेष्यतः।**

**हृदिस्थं तद् विशे( ष? ष्य)स्य [5]शरीरानुप्रवेशि यत् ॥३२॥**

---

१. भवनं—इति ख० पु० पाठः। २. क्वापि......धिता—इति क० पु०—ग० पु० त्रुटितः पाठः। ३. इतोऽग्रे 'साकाङ्क्षं चेद् विभागत्वादेकं'—इत्यधिकः क० पु०। ४. गेः—इति क० पु० पाठः। ५. शरीरासम्प्र—इति ख० पु० पाठः।

तटस्थं यथा—

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम्।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥२८॥

हृ ( द ? दि ) स्थं यथा—

तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
[1]या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः[2] ॥२९॥

प्रकृतमनुसृत्योक्तमर्थं निगमयति—

एषां समष्टिरष्टानां[3] साहित्यमिति निर्णयः।
सम्बन्धो वा सरूपेण[4] तद्धेतुः शक्तिरेव वा ॥३३॥
तदन्यो वास्तु वृत्त्यादिस्तत्समष्टिरपेक्षिता।

एवं समष्टिरूपस्य साहित्यस्य कथं परिष्कार इत्यपेक्षायामाह—

साहित्यस्य परिष्कारः पारम्पर्येण सिध्यति ॥३४॥
समुदायपरिष्कारः समुदायिपरिष्क (तै ? तेः)[5]।
साप्याधारपरिष्कारादित्या (य ? या) ता परम्परा ॥३५॥

अथ पक्षान्तरमुपन्यस्यति—

साहित्यं नाम सम्बन्धः सोऽष्टधेति मनीषिणः।
शब्दार्थावष्टभिर्मार्गैः[6] सम्बध्येते परस्परम् ॥३६॥

मनीषिणो भोजराजादयः। ते हि शब्दार्थयोर्द्वादशविधः सम्बन्धः साहित्यमित्याचक्षते।

नन्वभिधाविवक्षातात्पर्यविभागव्यपेक्षासामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादानालङ्कारयोगरसावियोगरूपः शब्दार्थयोर्द्वादशविधः सम्बन्धः साहित्यमिति श्रूयते,

१. इतः पूर्वं 'स्यात्' इत्यधिकः क० पु०। २. उ० मे० श्लो० २१, मोतीलाल बनारसीदास प्रकाशनम्, १९७० ई०। ३. र्थानां—इति ख० पु० पाठः। ४. स्वरूपेण—इति ख० पु० पाठः। ५. तिः—इति ख० पु० पाठः। ६. वर्गैः—इति ख० पु० पाठः।

कथमष्टौ सम्बन्धाः साहित्यमिति। उच्यते—चरमं चतुष्टयमागमापायित्वात् साहित्य-स्वरूपं न प्रविशति। तस्मात् तत् परिष्कारत्वेन निष्कृष्टम्। तच्चाष्टधेति निर्णयः। मार्गैः प्रकारैरित्यर्थः।

सम्बन्धो नाम क इत्यपेक्षायामाह—

सशक्तिरेव हि[१] सम्बन्धो व्यापाराद्यभिधानवान्।
वृत्त्यादयस्ताः कथ्यन्ते शक्तयः पुनरष्टधा ॥३७॥

व्यापारादीत्यादिशब्देन सहकारिसंज्ञयापि भण्यत इत्यर्थः।

एतेषामवान्तरभेदमाह—

वृत्तिस्तद्वद् विवक्षावत्[२] तात्पर्यं च विभागवत्।
चतस्रः केवला यं ताः शब्दसम्ब(न्धाः ? द्ध) शक्तयः ॥३८॥
याऽऽकाङ्क्षा यच्च सामर्थ्यमन्वयो यश्च तैस्त्रिधा[३]।
ऐकार्थ्यं[४] यच्च तास्तत्र सापेक्षाः शब्दशक्तयः ॥३९॥
पूर्वं चतुष्टयं स्वार्थं[५] स्वादीत्थमवलम्बते।

तदर्थान्तरमप्यपेक्षत इति स्पष्टमेतत्।

[६]शक्तिनिष्कर्षस्वरूपप्रविभागादेः साहित्यान्तर्भावं दोषेत्यादिचतुष्टयस्य बहिर्भावं सहेतुकं कथयति—

वाक्याद् वाक्यार्थबुद्धौ यद् व्युत्पत्तिसमयाजि[७] तत् ॥४०॥
यत्[८] सर्वमेव साहित्यवीथिका[९]मवगाहते।

---

१. शक्तिरेव हि—इति ख० पु० पाठः।
२. विवक्षा च—इति ख० पु० पाठः।
३. तैर्मिथः—इति ख० पु० पाठः।
४. विवाद्य—इति ख० पु० पाठः।
५. स्वार्थं—इति क-ग० पु० नास्ति।
६. वृत्तिविवक्षादेः साहित्यान्तर्भावं दोषभावगुणालङ्काररससम्बन्धस्य बहिर्भावं च स—इति ख० पु० पाठः।
७. याजितं—इति ख० पु० पाठः।
८. तत्—इति ख० पु० पाठः।
९. पीठिका—इति ख० पु० पाठः।

ननु सम्बन्धात्मनः साहित्यस्य कथ[१](न ? नं ) तद्गणैतद्गणादिभिरतिशया-धानम् । तत्राह—

[२]सम्बन्धिनी षष्ठसम्बन्धं तत्स्थैरेव प्रसाध्यते ॥४१॥
दोषत्यागादयस्तेन तत्स्थास्तस्य प्रसाधकाः[३] ।

सम्बन्धेनैकाधिकरणत्वाच्छब्दार्थस्यास्था अपि गुणादयस्तत् प्रसाधयन्तीत्यर्थः ।

एतदेव निदर्शनपुरस्सरं[३] विशदयति—

दोषवर्जनलावण्यभूता सरसतादिभिः ॥४२॥
प्र (स्वा ? सा)धितो भवेद् यद्वद् वधूवरसमागमः ।
सम्बन्धिनोः [४]परिष्कार इति चाव्यभिचारिणे ॥४३॥
[५]न सम्बन्धस्य परिष्कार इति वा कियती भिदा(ः ?) ।

अ(त्रै ? त्र) [६]वैचि(न्त्या ? त्र्या)न्त ( रम ? रं ) दर्शयति—

[७]उक्तितादर्थ्यसम्बन्धात् काव्ये शब्दार्थयोस्ततः ॥४४॥
तद्गता अपि जायन्ते गुणाद्यास्तत्प्रसाधकाः ।

शब्दार्थयोः सत्प्रधानस्वविधूननकाव्येगुक्तिप्रधानत्वात् तद्गता गुणादयोऽपि तामेवोक्तिमुल्लासयन्तीति यावत् ।

शब्दार्थयोः सहस्थानं साहित्यमपरे विदुः[८] ॥४५॥
तथा[९] परस्परस्पर्धायुक्तयोः काव्यसंस्थितिम्[१०] ।

---

१. कथमतद्गुणैर्गुणादि—इति ख० पु० पाठः ।
२. सम्बन्धिषु न सम्बन्धस्त—इति ख० पु० पाठः ।
३.३ शादकाः शब्दार्थनिष्ठगुणादेस्तत्सम्बन्धभूतसाहित्यपरिष्कारकत्वमेकाधिकरण्यादित्यर्थः । एतत् सनिदर्शनं—इति ख० पु० पाठः ।
४. परिष्कारस्तदैते व्यभि—इति ख० पु० पाठः ।
५. ख० पु० न नास्ति ।
६. वैचित्र्यान्तरमपि दर्शयते—इति ख० पु० पाठः ।
७. उक्तिप्रधानं तादर्थ्या वलात्ताप्येवयोर्यत्रा—इति ख० पु० पाठः ।
८. वपुः—इति ख० पु० पाठः ।
९. श्रिया—इति ख० पु० पाठः ।
१०. संश्रितम्—इति ख० पु० पाठः ।

अपरे पुनराचार्या एवं विदुः— शब्दार्थयोः सहभावेनावस्थानं साहित्यं यत् तयोः काव्यमिति संज्ञया, तेन तु सिद्धत्वाच्छब्दार्थयोः सम्बन्धस्य न कथञ्चित् साहित्यविरहः। उक्तं हि—

शब्दार्थौ सहितावेव प्रतीतौ पुरतः सदा।
सहिताविति तावेव किमपूर्वं विधीयते॥ इति।

तदनिष्टमपि काव्यं भवतीति सदसमेतत्, किन्तु विशिष्टमेव साहित्यमभिप्रेतम्। कीदृशम् ? वक्रताविशिष्टगुणालङ्कारसंस्कारसम्भृतं परस्परस्पर्धाविरहार्थाविरुद्धम्। यथा—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥३०॥

यथा च—

लीलाए कुवलअं कुवलअं व सीसे समुव्वहन्तेण।
सेसेण सेसपुरिसाण पुरिसआरो समुम्फुसिओ॥३१॥

अतः शब्दार्थयोः परस्परस्प(रार्थ ? र्धा)विरहात्।

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि।
यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयं मे॥३२॥

अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते॥३३॥

प्रकाशस्वाभाव्यं विदधति न भावस्तमसि यत्
तथाभूतास्ते स्युर्यदि किल न ते तत्र न कथम्।
गुणाध्यासाभ्यासव्यसनकृतदीक्षागुरुगुणो
रविव्यापारोऽयं किमथ सदृशस्तस्य महसः॥३४॥

इत्यादिषु तु काव्यत्वहानिः। किञ्च शब्दस्य शब्दान्तरेण, अर्थस्यार्थान्तरेण परस्परस्पर्धित्वलक्षणं साहित्यं च विवक्षितम्। तेन—

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः॥३५॥

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥३६॥

इत्यादिषु साहित्यहानिः । तदेवं विशिष्टं सह एव ज्ञानं साहित्यम् । उक्तं हि—

साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ॥
मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः ।
अलङ्करणविन्यासो वक्रतातिशयान्वितः[1] ॥
वृत्त्यौचित्यमनोहारि रसानां परिपोषणम् ।
स्पर्धया विद्यते (यत्र) यथास्वमुभयोरपि ॥
सा काप्यवस्थितिस्तद्विदाह्लादैकनिबन्धनम् ।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥
अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसम्पदा ।
गीतवद्धृदयाह्लादं तद्विदां विदधाति यत् ॥
वाच्यावबोधनिष्पत्तौ पदवाक्यार्थवर्जितम् ।
[2]यत् किमप्यु(क्त ? क्त)र्पयन्तः पानकास्वादवत् सताम् ॥
स्फुरितं [3]जीवितेनैव जीवितं कविना विना ।
विना निर्जीवतां[4] याति येन वाक्यं विपश्चिताम् ॥
यस्मात्[5] किमपि सौभाग्यं तद्विदामोदगोचरम् ।
सरस्वती समभ्येति तदेतत् प्रतिपादितम् ॥ इति ।

**एतन्मतमपि प्रायो [6]मतमस्माकमश्नुते ॥ ४६ ॥**
**अभेदः ख्याप्यते तत्र किन्तु साहित्यकाव्ययोः ।**

एतन्मतमप्यस्मन्मतमेवाप्नोति । इदमन्तरम्—'परिष्कारः[7] साहित्यम्' इति

---

१. न्विता—इति ख० पु० पाठः ।
२. युक्तिमप्यनयत्यन्तः—इति ख० पु० पाठः ।
३. जीवितेनैव जीवितं परमन्तरम्—इति ख० पु० पाठः ।
४. विनान्तर्जीवताम्—इति ख० पु० पाठः ।
५. यत् स्यात्—इति ख० पु० पाठः ।
६. मतमास्माक—इति ख० पु० पाठः ।
७. सपरिष्कारं—इति ख० पु० पाठः ।

तेषां मतम्, वयं तु शब्दार्थयोः 'सम्मेलनमात्रयुक्तिरूपं साहित्यं तच्छास्त्राख्यानादि-साधारणम्, अन्यत् [1]परिष्कारविशिष्टं तत् काव्यमिति मन्यामहे।

शब्दार्थौ सहितौ[2] 'वक्रकविव्यापारशालिनि'[4]।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि[5]॥

इत्यनेनापि विशिष्टोक्तिरेव काव्यं भवतीति मन्तव्यम्। अतो यत् केषाञ्चिन्मतम् 'कविकौशलकल्पितकमनीयतातिशयः शब्द एव केवलः काव्यम्' इति, केषाञ्चिद् 'रचनावैचित्र्यचमत्कारकारि वाच्यमेव काव्यम्' इति[7] पक्षद्वयं निरस्तम्। उच्यते हि—

शब्दार्थौ दोषरहितौ[3] सगुणौ बन्धवर्तिनौ।
काव्यं चारुतयाऽन्यर्थमन्योन्यः सन्धिनाविव[8]॥ इति।

कोऽत्र शब्दः, को वार्थो नामेति—

**वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि॥ ४७॥**
**तथापि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः।**
**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि॥ ४८॥**
**अर्थः सहृदयाह्लादकारी सुस्पन्दसुन्दरः।**
**यथा दोषाकरः कामं मां निर्दहति निर्दयम्॥ ४९॥**
**यथा निदाघो रजनी राजलक्ष्मा दुनोति माम्। ५०।**

किञ्च शब्दस्योदाहरणम्—

**कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि कमलालय मावमंस्थाः।**
**एकेन किं न विहितो भवतः स नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि॥३७॥**

---

१. सम्मेलनमात्रार्थयोर्मेलनमात्र—इति ख० पु० पाठः।
२. अत्र 'यत्' ख० पु० अधिकः।
३. दोषरहितौ—इति ख० पु० पाठः।
४. वक्र—इति ख० पु० नास्ति।
५. शालिनौ—इति ख० पु० पाठः।
६. कारिणौ इति ख० पु० पाठः
७. च—इत्यधिकः ख० पु०।
८. मन्योन्यस्पर्धिनाविव—इति ख० पु० पाठः।

अत्र रत्नसामान्योत्कर्षाभिधानमुपक्रान्तं तदनुगुणेन शब्देनोपसंहृतं च, न या तु न्यस्तम्; किं कौस्तुभेन विहितो भवतो न नामेति ।

यथा—

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥३८॥**

अत्र पिनाक्यादिपरमेश्वरवाचकशब्दसहस्रसम्भवे 'कपालिनः' इति बीभत्सरसालम्बनविभाववाचकः शब्दो जुगुप्साकरत्वेन प्रयुज्यमानः कामपि शोभामावहति ।

यथा वा—

**संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः**
**सर्वस्यैव स जातिमात्रविहितो हेवाकलेशः किल ।**
**इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्**
**कोऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥३९॥**

अत्र कीटशकलादयः शब्दा विवक्षितवाचकाः ।

अर्थस्योदाहरणम्—

**दंष्ट्रापृष्ठेषु सद्यः शिखरिषु न कृतः कण्ठकण्डूविनोदः**
**सिन्धुष्वङ्गावगाहः खुरकुहरगलत्तोयतुच्छेषु नाप्तः ॥**
**लब्धाः पातालपङ्के न लुठनरतयः पोत्रमात्रोपयुक्ते**
**येनोद्धारे धरित्र्याः स जयति बहुधा विघ्नितेच्छो वराहः ॥४०॥**

अत्र पदार्थपरिस्पन्दमहिमा निबद्धः, यः स्वभावसम्भाविनस्तस्य परिस्पन्दान्तरस्य संरोधसम्पादनेन स्वभावमहत्तामुल्लासयन् सहृदयहारितामापन्नः ।

**तामभ्यगच्छद् रुदितानुसारी मुनिः कुशेध्माहरणाय यातः ।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥४१॥**

अत्रोत्तरार्धार्थो[1] मुनेः परमकारुणिकत्वे [2]नितान्तमुपयुक्तः । एवम् "भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहम्" इत्यादिष्वपि द्रष्टव्यम् ।

---

१. अत्र शोक एव श्लोकत्वमागत इत्ययमर्थो—इति ख० पु० पाठः ।

२. नितरामुपयुज्यते—इति ख० पु० पाठः ।

पुनरेवंविधः—

सद्यः पुरीपरिसरेषु शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥४२॥

अत्रासकृत् कियदद्य गन्तव्यमित्यभिधानलक्षणः परिस्पन्दो न स्वभावमहत्तामुन्मीलयति, सीताया हृदये परिस्फुरदपि न वचनमारोहि । किञ्च, प्रतिक्षणमभिधीयमानमेतद् रामाश्रुप्रथमावतारकरणमित्यपि न युक्तम्, सकृदाकर्णनादेव तस्योपपत्तेः । ततोऽयमर्थो न हृदयमाह्लादयति । तस्मादवशमित्यत्र पाठः करणीयः । तदेवंविधयोर्द्वयामेलनं साहित्यविशिष्टं काव्यमिति स्थितम् ।

॥ इति द्वितीयं प्रकरणम् ॥



## अथ तृतीय प्रकरणम्

एवं यदिदं साहित्यं नाम निःसीमनि कविसमयाध्वनि शब्दमात्रे ।

**प्रयोगे दूष्यते येन स दोषः परिकीर्तितः ।**
**शास्त्रे लोके च समये निषेधात् त्याज्य एव सः ॥५१॥**

**अक्षरस्थो गणस्थश्च पदवाक्यतदर्थ (काः ? गाः) ।**
**अक्षरस्थगणस्थौ द्वौ काव्यारम्भेषु चाटुषु ॥५२॥**

**वर्जनीयौ तदन्ये तु सर्वत्र परिवर्जिताः ।**
**अन्यत्र दर्शितौ दोषगुणौ वर्णगणस्थितौ ॥५३॥**

**अथ दोषाः प्रकाश्यन्ते पदवाक्यतदर्थ (काः ? गाः) ।**
**अप्रयुक्तमथ ग्राम्यमसमर्थमनर्थकम् ॥५४॥**

**साधारणप्रसिद्धार्थे पदानां दूषणानि षट् ।**
**कविभिर्न निबद्धं यदप्रयुक्तं तदुच्यते ॥५५॥**

यद् वदन्ति[2] मुनिश्रेष्ठाः सृष्टिस्थित्यन्तकारणम् ।
तदाद्यं परमं धाम[3] मम शोशुभ्यतां हृदि ॥४२॥[4]

**अप्रयुक्तेऽप्रयुक्तं स्यादेवमादिनिबन्धनम् ।**

[5]ग्राम्यमश्लीलममङ्गलार्थम्—

---

१. अथ दोषस्य सामान्यलक्षणमाह—इति ख० पु० पाठः ।

२. वचन्ति—इति ख० पु० पाठः ।

३. धाम ( मगो ? ) शुध्यतामिति—इति क० पु० ग० पु० पाठः ।

४. इतः परम्—अत्र वचन्ति शोशुभ्यतामिति पदद्वयमप्रयुक्तम्, शुभ्र्, वरिवस्यादिशब्दानामसाधुत्वकष्टत्वयोरपि प्रयोगेणाङ्गीकाराद् वचत्यादिशब्दानां साधुत्वसुश्रवत्वयोरप्यप्रयोगेण परिहारादसाधुत्वकष्टत्वादि न पृथग् दूषणम्, अतः प्रयोग एव प्रयोजनः, वेश्याप्रतितद्यन्त्रिवान्तम् तमार्षत्वहेतोरप्रमेयस्यापि कारणप्रयोग एव-एतावानंशः क० पु० ग० पु० नास्ति ।

५. तद् ग्राम्यमश्लीलघृणामङ्गलार्थप्रकाशकं यथा—इति ख० पु० पाठः ।

[1]छत्राकारशिराः सिरालसरलस्थूलप्रकाण्डो महान्
मध्येसूर्यसुताभ्रसिन्धुविपुलाभोगो वटः पातु वः ।
कार्यैक्ये विकटप्रसारितमहाजङ्घं महीसुप्तयो-
र्यः खण्डेन्द्रकिरीटकैटभजितोः काटश्रियं कर्षति[2] ॥४४॥

अमङ्गलार्थम्—

खेटके भक्तसूपस्य वलभ्याः पतनस्य च ।
अतृप्तोऽहं मरिष्यामि हेहलेभाषितस्य च[3] ॥४५॥

**अवाचकपदं यत् स्यादसमर्थं तदुच्यते[4] ॥५६॥***

---

* एतदग्रे मातृकायां किञ्चित् त्रुटितं भवेत् ।

१. छत्राकार·········महीसुप्तयोः—इति चरणत्रयं ख० पु० नास्ति ।

२. कर्षते—इति ख० पु० पाठः ।

अत्र काटशब्दोऽश्लीलार्थः ।

पर्दते दहति स्तन्यं वमत्येव स्तनन्धयः ।
मुहुरुत्कौति निष्ठीवत्यात्तगर्भा पुनर्नवाढूः ॥

अत्र पर्दत इत्यादिपदं घृणार्थम्—इत्यधिकः ख० पु० ।

३. खेटके·········भाषितस्य च—इति पद्यं ख० पु० नास्ति ।
मरिष्यतीत्यादिपदमङ्गलार्थकम्—इत्यधिकः पाठः ख० पु० ।

४. यथा—

" जलं जलधरा······मयां वर्षति वारिधिः ।
इदं नु हितमश्वानां ककुद्मानेष हेषते ॥

अत्र जलधरवारिधिबृंहितादिशब्दानां समुद्रमेघाश्ववृषविषयतया प्रयुज्यमानत्वादवाचकमिति । असमर्थम् ।

अत्रोस्याः यापुण्यवाप्यन्तर्भावः ।
यत्त्वप्रयोजनं प्राशैस्तदनर्थकमीरितम् ॥

यथा—

बिभर्ति यश्च देहार्धे स्त्रियमिन्दुं हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥

(भृङ्गेण कलिका) कोशस्तथा भृशमपीडयत ।
ववर्ष विपिनोत्सङ्गे गोष्पदप्रं यथा मधु ॥४६॥

---

अत्र चहिवैवलतुल्यादिशब्दानां पादपूरणप्रयोजने सत्यपि स्वार्थेनानुपयुक्तत्वादनर्थकमप्रयोजकमुच्यते ।

न यत् पदं निश्चयकृत् साधारणमिहोच्यते ।
नीललोहितमूर्तिर्यो दहत्यन्ते जगन्त्यपि ।
स एव हि महादेवस्त्रिषु लोकेषु पूज्यते ॥

अत्र नीललोहितादीनि पदानि रुद्राग्न्योः साधारणानि । इदमेव विरुद्धमपि ।

यद् गूढार्थप्रयोगं तदप्रसिद्धार्थमीरितम् ।
सहस्रगोरिवानिरं भवतो दुरसहं वरे ।
हरेरिव नभा भान्ति नान्यतेजांसि तेजनि ॥

अत्र सहस्रगुशब्दादयः सहस्राक्षादिष्वप्रसिद्धाः । अविज्ञातार्थाक्लिष्टनेयार्थाद्या अत्रैवा तभवन्ति । एतत् सकलमपि दोषजातं सूक्ष्ममीक्ष्यमाणं रोगराजयक्ष्माणमिव काव्यास्यप्रयुक्तानामानामाद्यं दोषमनुसन्तते ।

अथ वाक्यदोषः—

असाधु भिन्नवचनं भिन्नलिङ्गं विसन्धिकम् ।
भग्नच्छन्दो यतिच्छन्दो वाक्यानां दूषणानि षट् ॥
तदसाध्विति निर्दिष्टं वाक्यं यदपशब्दवत् ।

यथा—

नीरन्ध्रं गमितवति क्षयं पृषत्कैर्भूतानामधिपतिना शिलावितानं ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥

अत्र गमितवतीति क्तवतेरकर्मणि, आजघ्न इति हन्तेरस्वाङ्गे प्रयोगादपशब्दावेतौ । एतयोः शिलावितानवक्षसोःसम्बन्धाद् वाक्य एव दुष्टता, न त्वप्रयोगात् ।

तद् भिन्नवचनं यत्र यद् भिन्नवचनोपमम् ।

यथा—'सरांसीवामलं व्योम' इति ।

अत्र वचनशब्देनोक्तिरूपा रीतिरपीष्यते, अतो रीतिभङ्गोऽपि सङ्गृहीतः ।
यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गं तदुच्यते ।

'हंसीव धवलः शशी' इति ।
विसंहितो विरूपो वा यस्य सन्धिर्विसन्धि तत् ।

प्रत्यक्षादिविरुद्धं यद् विरुद्धमभिधीयते ।

[१]विरुद्धं यथा—

सुराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षवेलनालिकेराङ्का यदुपान्ताद्रिभूमयः ॥४७॥

यथा—

मेघानिले स अमुना एतस्मिन्नद्रिकानने ।
मञ्जर्युद्गमगर्भासौ तवाम्यवि विधीयते ॥

अत्र पूर्वार्धे विसन्ध्युदाहरणम्; उत्तरार्धे विरूपसन्धानम् । प्रत्यक्षं सन्धिरिति शब्दसश्लेषमात्रं केचिद् वर्णयन्ति । ततो वाक्यगतं शैथिल्यकष्टत्वादिकमपि अत्रान्तर्भूतम् ।

भग्नच्छन्द इति प्राहुर्यच्छन्दोभङ्गवद्वचः ।
यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः । इति ।
अत्र पञ्चमवर्णस्य लघुत्वाभावात् छन्दोभङ्गः ।
अस्थाना विरतिर्यत्र स भिन्नयतिरिष्यते ।
भक्तानां भूयः श्रियै चन्द्रमौलिः ।
गुणानां च्यवते यत्र श्लेषादीनां विपर्ययः ।
अरीतिमदिति प्राहुः केऽप्यस्मिन् दूषणान्तरम् ॥

अथ वाक्यार्थदोषाः—

अपार्थं विगतार्थं च पुनरुक्तमपक्रमम् ।
अतिमात्रं विरुद्धं च प्राहुर्वाक्यार्थदूषणम् ॥
समुदायैकदेशार्थशून्यं वाक्यमपार्थकम् ।
जायेत रञ्जनाद् राजा सिञ्चन् सकलमग्नि ... गद्‌गदः । इति ।
विगतार्थं प्रस्तुतार्थे यच्च स्यान्निष्प्रयोजनम् ।
कदम्बपुष्पं नवसौरभाढ्यं वहन्ति वाता वननिम्नगाश्च ।
भवन्ति पेयाः प्रथमे भुजङ्गैरजङ्गमानां हि गिरः प्रयन्ते ॥
ज्ञातस्य शब्दादर्थाद् वा साधनं पुनरुक्तिमत् ।

स्फुटम् ।

अपक्रमः प्रसिद्धार्थपौर्वापर्यविपर्ययः ।

स्फुटम् ।

व्याकीर्णादेरप्यत्रैवान्तर्भावः ।

उच्यतेऽतीतमर्यादमतिमात्रमितीर्यते ।
'पुष्परसेन जगदेकार्णवम्' इति ।—इति ख० पु० पाठः ।

१. विरुद्धं यथा ......... च मे पिता ।—इति ख० पु० नास्ति ।

तथैव—

याबज्जीवम (हो ? हं) मौनी ब्रह्मचारी च मे पिता ।
[1]माता च मम वन्ध्यासीत् (सुरापो ? स्मराभो) ऽनुपमो भवान् ॥ ४८॥

[2]प्रतिज्ञाविरुद्धं यथा—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥४९॥

आगमविरुद्धं यथा—

असावनुपनीतोऽपि वेदानधिज (ने ? गे) गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥५०॥

दोषो नास्ति स्वरूपेण पदार्थानामसम्भवात् ॥५७॥
यदस्ति वस्तुनोरन्तर्बीभत्सा (च्छी ? श्ली) लरूपतः ।
तदुक्तं दूषणं ग्राम्यपदे तत्स्मारके पुरा ॥५८॥
तस्मात् पदार्थदोषाणां नोपन्यासोऽस्ति कुत्रचित् ।
एवं पदानां वाक्यानां वाक्यार्थानां च यः कविः ॥५९॥
दोषान् हेयतया वेत्ति (साकल्यं ? स[3] काव्यं) कर्तुमर्हति ।
अनेकगुणमध्ये (क ? तद्) दोषेणैकेन निन्द्यते ॥६०॥
अनेकलक्षणोपेतं वपुः श्वित्रेण दुर्भगम् ।
मतान्तरमिदं व्यक्तिभेदं भेदे व्यनक्ति च ॥६१॥

एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।५१।

---

१. मम माता वन्ध्येत्यादि—इति ख० पु० पाठः ।
व्याहतमप्यत्रैव—इति क० पु० ग० पु० नास्ति ।

२. प्रतिज्ञाविरुद्धं ·········संस्कारमपेक्षते ॥—इति ख० पु० नास्ति ।

परोक्तानामपि दोषाणामत्रान्तर्भावमाह—

अन्येषामपि दोषाणामन्तर्भावोऽत्र दृश्यते ।
तदार्थे दोषाः कुतो न कथितास्तत्राह—इति क० पु० ग० पु० नास्ति ।

३. स—इति क० पु० नास्ति ।

इदमपि ।

दूरे दारुवनानि हारकमुधा चा··निमाभाकथा
भूयस्त्वं पुनरप्यहं यदि पुरश्चन्द्रः क्षितिं यास्यति ।
इत्युक्तः शशिमौलिरद्रितनयाचूडेन्दुभूलम्भन-
व्याजव्यञ्जितपादपद्मपतनप्रीतः प्रियः पातु वः ॥५२॥

तं पातयां प्रथममास पपात पश्चात् ।५३।
प्रभ्रंशयां यो नहुषं चकार ।५४।

इत्यादि न दोषः ।

॥ इति तृतीयं प्रकरणम् ॥



## अथ चतुर्थं प्रकरणम्

[1]गुणाः श्लेषप्रसादाद्या ये काव्ये समवायिनः ।
बाह्यान् शब्दगुणान् प्राहुरान्तरानर्थसंश्रयान् ॥६२॥

अङ्गश्लेषादिवच्छब्दा अर्था मधुरतादिवत् ।
नव तत्र प्रसिध्यन्ति ये दोषप्रतियोगिनः ॥६३॥

अवश्यम्भाविनस्ते स्युस्तेषु सप्तानुयायिनः ।

शिथिलाप्रसन्नविषमकठोरनेयार्थानुदारनिच्छायग्राम्यरूपा (रीतिमद्दूषण ?)[2] विरोधिनः श्लेषप्रसादसमतासौकुमार्यार्थव्यक्ति[I]रुदारकान्तादयो गुणाः [3]सर्वत्रापेक्षणीयाः ।

ओजो माधुर्यमित्येते स्वे स्वे वेश्मनि तिष्ठतः ॥६४॥
वैदर्भ्यामत्र माधुर्यं गौड्यामोज इति स्मृतम् ।

[4]स्वलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम् ॥६५॥
समुद्भूतगुणः प्राज्ञैर्निरलङ्कारमात्रतः[5] ।
निर्भूषणमपि श्लाघ्यं [6]सुन्दरं सविभूषणम् ॥६६॥

---

I. 'व्यक्त्युदार' इति समासेनात्र भवितव्यम् (सम्पादकः) ।

१. अथ गुणसामान्यलक्षणमाह—इत्यधिकः ख० पु० ।
गुणाः समवायिनः । समवायिन इत्यलङ्कारव्यावृत्तिः । ते चापि बहुधा प्रोक्ता बाह्याभ्यन्तर-भेदतः—इति च ख० पु० पाठः ।

२. ग्राम्यारीतिमद्भूषण—इति ख० पु० पाठः ।

३. सर्वत्रापेक्षिताः, अन्यथा एतद्दूषणोपनिबन्धप्रसङ्गादित्यर्थः—इति ख० पु० पाठः ।

४. एतद् विपर्ययाद् रीतिभङ्गो नाम दोषः ।
एवमेकत्र विषये गुणाष्टकं सम्पन्नम् । तथाप्युदाहरणेऽप्यदर्शने अरायामुद्भूतेन व्यवहारः ।
अलङ्काराद् गुणस्य प्राधान्यमाह—इत्यधिकः ख० पु० ।

५. मावृतम्—इति ख० पु० पाठः ।

६. वपुः प्रकृतिसुन्दरम्—इति ख० पु० पाठः ।

"सरसिजमनुविद्धं शैवलेन" ।५५। इत्यादि ।

विभूषणसहस्रेऽपि विरूपं किं प्रशस्यते ।
गुणयोगस्ततो मुख्यो गुणालङ्कारयोगयोः ॥६७॥

निरलङ्कारमपि[1] ग्राह्यम्[2] ।

य: कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि हन्त सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥५६॥

अत्र माधुर्यादिगुणभूयस्ता ।

अलङ्कृतमपि गुणहीनमनादृतम् । यथा—

पश्यानभ्यञ्जनाञ्जन्मसदृक्षां कोमलभ्रुवः ।५७।

अत्र प्रसादादिगुणाभावोऽनुप्रासोपमालङ्कारयोगश्च ।

अथ गुणानां स्वरूपं लक्षयति—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥६८॥

इति काव्यशरीरस्य श्लाघ्या दश गुणाः स्मृताः ।
सुश्लिष्टत्वं विभिन्नानां श्लेष इत्यभिधीयते ॥६९॥

विभिन्नानां पदानामिति । तथाहि—

[4]"भिन्नानामपि पदानामेकपदप्रतिभासहेतुरनतिकोमलो बन्धविशेषः श्लेषः" इत्युक्तम्[5] ।

केवलं दीर्घबहुलैर्यद् वा बहुविसर्जनैः ।
द्वित्राक्षरपदैर्बद्धैरल्पप्राणाक्षरोत्तरैः ॥७०॥

---

१. गुणवत्तया—इत्यधिकः ख० पु० ।
२. परिगृह्यते । यथा—इति ख० पु० पाठः ।
३. विभक्तानां—इति ख० पु० पाठः ।
४. विभक्तानामविभक्तानां च पदानामैक्यरूप्यहेतुर्बन्धः—इति ख० पु० पाठः ।
५. उक्तं चैतद् विशेषेण—इति ख० पु० पाठः ।

शैथिल्यं नाम जायेत तस्मात् तत् परिवर्जयेत् ।
ह्रस्वसंयोगदीर्घाणां पद्ये कुर्याद् विमिश्रणम् ॥७१॥
श्लेषः सुसन्धिर्जायेत प्राणाक्षरविमिश्रणात् ।

यथा—

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥५८॥

यद्वा—

भूनिर्विशेषं विबमप्यशेषां प्रशासति त्वय्यतुलप्रतापे ।
अनाततज्यं धनुरस्मदीयमलङ्क्रिया केवलमम्बुदानाम् ॥५९॥

आचार्यस्याप्ययमेवार्थोऽभिमतः—

यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसन्धीनां स श्लेषः परमो गुणः ॥ इति ।

अथ प्रसादः[१]—

( आ ) विद्वदङ्गनाबालं प्रकटं यत् प्रसादवत् ॥७२॥

प्रकटं प्रकटार्थम् । उक्तं हि—

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां स प्रसादो गुणो मतः ॥ इति

यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥६०॥

यद् वा—

मूले नन्दनशाखिनां सिकतिले मन्दाकिनीरोधसि
क्रीडावेश्मसु चित्रवत्सु च तव श्लाघ्यं यशो गायतः ।
आसीदप्सरसां गणस्य दशनज्योत्स्नारसक्षालिता
कर्पूरच्छुरणावृतेऽपि फलिनी पाण्डुः कपोलद्युतिः ॥६१॥

१. अथ प्रसादः—इति क० पु० ग० पु० नास्ति ।

श्लथत्वमोजःसम्मिश्रं प्रसादं सम्प्रचक्षते ।
अनेन न विना सत्यं स्वदते पदपद्धतिः ॥

इत्युक्तमाचार्येण । ......योजसा मिश्रेण श्लथत्वेनार्थप्राकट्यमेव भवति ।

**अवैषम्येण भणनं समता साऽभिधीयते ।**

मृदूनां स्फुटानां च बहूनां वर्णानामवैषम्येण भणनम् । तथाहि--

**केवलैर्मृदुभिर्वर्णैर्यदि वा केवलैः स्फुटैः ॥७३॥**
**न्यस्यमानैरवैषम्यं बन्धस्य समता भवेत् । इति ।**

मृदुभणितिर्यथा—

**कोकिलालापवाचालो मामेति मलयानिलः ।६२।**

स्फुटभणितिर्यथा --

**यच्चन्द्रकोटिकरकोरकभारभाजि**
**बभ्राम बभ्रुणि जटापटले हरस्य ।**
**तद् वः पुनातु हिमशैलशिलानिकुञ्ज-**
**झात्कारडम्बरविराविसुरापगाम्भः ॥६३॥**

यथाहाचार्यः—

प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥

अथ माधुर्यम्[1]—

**मधुरं रसवत् प्रोक्तमेतद् वैदर्भजीवितम् ॥७४॥**

रसवदित्यमिलष्टशब्दस्वरूपमात्राधीनो रसो विवक्षितः, न तु शब्दप्रतिपाद्य इति कथयति ।

**पृथग्भूतैः पदैः श्राव्यैः शक्य...शालिभिः[2] ।**
**श्रोत्रेषु विदुषां वाणी सरसा स्यन्दते मधु ॥७५॥**

उक्तं हि[3]—

---

१. अथ माधुर्यम्—इति क० पु०—ग० पु० नास्ति ।
२. श्रुत्यनुप्रासशालिभिः—इति ख० पु० पाठः ।
३. क० पु०—ग० पु० नास्ति ।

पृथक्पदत्वं माधुर्यं केचिदिच्छन्ति सूरयः ।
वैदर्भी रीतिरेषैव कथ्यतेऽन्यैर्मनीषिभिः ॥ इति ।

किञ्च,

**यथा कयाचिच्छ्रुत्या यत् समानमनुभूयते ।**
**तद्रूपादिपदासत्तिः सानुप्रासा रसावहा ॥७६॥**

यथा—

मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥६४॥

**अदीर्घेण समासेन नास्य हानिः कदाचन ।**

अस्येति माधुर्यस्य । यथा—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥६५॥

पल्लवेन पवनानुम ···ना ·····प्रणयिनीव ह······ती ।
चण्डि चम्पकलता समागतं माधवीमधुकरं न दृश्यते ॥६६॥

यथाहाचार्यः—

बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेनैव पदन्यासाः कामं धारा मधुश्च्युता ॥ इति ।

अथ सुकुमारता[1]—

**नैष्ठुर्यरहितं यत् स्यात् सुकुमारमिति स्मृतम् ॥७७॥**

नैष्ठुर्यमक्षराणाम् । रहितमित्येतेनैकान्ततस्तस्य त्यागो विवक्षितः ।

उक्तं हि[2]—

अनिष्ठुराक्षरप्रायं सुकुमारमिहोच्यते ।
असर्वकोमलत्वेन शैथिल्यानुभवे सति ॥

---

१. क० पु०—ग० पु० नास्ति ।
२. अन्ये तु—इति ख० पु० पाठः ।

श्लेषश्च मृदु साम्यं च यदा तुल्यबलस्थिते ।
तदा भवेत् सौकुमार्यं सर्वं संवित्प्रमाणकम् ॥
मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥
इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः ।
सुकुमारतयैवैतदारोहति सतां मनम् ॥

अस्मि……गतकठोरविपर्ययात्मा सौकुमार्यं नाम गुणः सर्वलोकसिद्ध एव । यथाहाचार्यः—

बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ।
एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ॥ इति ।

**एतन्न केचिदिच्छन्ति मन्वाना गुणसम्प्लवम् ।**

किञ्च,

केचिदन्यार्थमन्येषु दोषरागात् परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥

इति कथयन्तः केचन कष्टनिराकरणेन सौकुमार्यं सिद्धमिति कथयन्ति ।

**अर्थव्यक्तिं वदन्त्येतत् पूर्णमर्थस्य दर्शनम्** ॥७८॥

यथा—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥६७॥

अत्र वाक्यपरिपूर्णतया सम्परिलमर्थव्यक्तिः । उक्तमाचार्येण—

पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः ॥ इति ।

**औदार्यमुच्यते प्राज्ञैरुत्कर्षप्रतिपादनम् ।**
श्लाघ्यविशेषणयोगाच्छब्दानामुत्कर्षो भवति ।
**श्लाघ्यैर्विशेषणैर्युक्तमुदात्तं कैश्चिदिष्यते** ॥७९॥ इति।

यथा—

श्रुत्वा[1] यं सहसागतं निजपुरात् त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दितिर्यक्पुटाः ।
शुभ्रे वेश्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च सशाड्वले विवलितग्रीवैर्विमुक्ता दृशः ॥६८॥

---

१. दृष्ट्वा—इति ख० पु० पाठः ।

यद् वा—

कस्तूरीतिलकः कपोलमकरी कश्मीरपत्राङ्कुराः ।
क्रीडाकेतकदन्तपत्रविधयः कर्पूरहारस्रजः ॥६९॥

**विकटाक्षरबन्धानां पदानां[1] नृत्यतामिव ।**
**या वर्णरचना केचित् तदौदार्यं प्रचक्षते ॥८०॥**

उक्तं च—

विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
विचित्रा न प्रदर्श्यन्ते यया शून्याः पदक्रमाः ॥

यथा—

स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झटिति रणितमासीत् तत्र चित्रं कलं च ॥७०॥

न पुनः—"चरणकमललग्नैर्मञ्जु चित्रं च तत्र ।" इति ।

**ओजस्तद् भूयसां यस्मिन्नेकार्थीभवनं विदुः ।**

भूयसां पदानां समासेनैतत् सम्पद्यते । यथा—

जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दु-
स्रवदमृतनिवृत्तप्रेतभावैः कपालैः ।
विरचितनुतिबन्धो मूर्ध्नि सद्यः पुरारेः
परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः ॥७१॥

लङ्घ्यन्ते रघुवीरसेतुसरणीसीमासमीपोपल-
स्फारास्फालनफेनिलाङ्घ्रिलहरीवाचालवेलानिलाः ।
एतच्छीतलनालिकेरविपिनच्छायानुलिप्तस्थली-
लीनाध्वन्यनिपीयमानसि(क)ताकूपाम्भसो भूमयः ॥७२॥

केचिद् गाढबन्धतामोजो वर्णयन्ति । यथा हि—

पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥

---

१. पदार्थानां—इति ख० पु० पाठः ।

एतच्छ्लेषेण सिद्धमिति मन्यामहे ।

**यदुज्ज्वलत्वमुचितं सा काव्ये कान्तिरुच्यते ॥८१॥**

**छायावत्त्वेन [1]बालानामेतत् सम्भाव्यते बुधैः ।**

यथा—

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
न साले सालम्बो लवमपि लवङ्गे न रमते।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥७३॥

**औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः ॥८२॥**

**पुराणचित्रस्थानीयं तेन बन्ध्यं कवेर्वचः ।**

शब्दकान्तिविपर्ययनामा निच्छायो नाम दोषः । अर्थकान्तिविपर्ययो रसमासृण्यहेतुर्ग्राम्य इति निर्णयन्त्याचार्याः ।

**अन्यावलम्बनं यत् स्यात् स समाधिरिति स्मृतः[2] ॥८३॥**

यथा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥७४॥

अत्र

प्रतीच्छत्यादिचेतनक्रियाधर्माणामचेतनाशोकाद्यवलम्बनं समाधिः ।

'आरोहावरोहक्रमः समाधिः' इति केचित् ।

तथा हि[3]—

आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणः पूता तेन सरस्वती ॥

---

१. बन्धानाम्—इति ख० पु० पाठः ।

२. स्मृतः सचेतनाचेतनादेः स्वेतरधर्मालम्बनं तदर्थः । ततोऽर्थगुणोऽयम् । यथा—' आकृष्टे युधि कार्मुके समगमद् बाणः करोऽग्रेसरः" इत्यादि । —इति ख० पु० पाठः ।

३. अन्ये तु—इति ख० पु० पाठः ।

निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे । इति ।

यद् वा—

'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः' इति ।

'अतिगाढबन्धरसात्मकावोजःप्रसादौ । तद्रूपत्वादारोहावरोहयोर्गुणसम्प्लवोऽयं समाधिः' इति केचित् ।

एतान् गुणान् प्रमाणेन साधय(न्ति ? ति )—

**नहि सन्ति गुणाः शाब्दाः प्रमावृत्तिरबाधिता ।**
**न पाठधर्माः सिध्येयुः सर्वत्रादर्शनात् पुनः[1] ॥८४॥**
**पाठो विशेषापेक्षी चेद् गुणाननुमतिः कथम् ।**

प्रोक्ता एत एवार्थगुणाः[2] ।

**एतल्लक्षणवाक्यानि[3] योज्यन्तामत्र सूरिभिः ॥८५॥**

श्लेषो यथा[4]—

दृष्ट्वैकासनसङ्गमे प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलात् ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥७५॥

अत्रात्यन्तभिन्नयोः सपत्नीद्वयप्रसाधनरूपयोरर्थयोरेकत्र युगपच्छ्लेषः सिद्ध एव ।

यद् वा—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
समं चक्रीकृत्य प्रहसितमुखी शैलतनया ।
अवोचद् यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥७६॥

अत्र भिन्नार्थसंश्लेषः प्रकटः ।

---

१. पुनः—इति क० पु० ग० पु० नास्ति ।
२. एते शब्दगुणाः प्रोक्ताः । एत एवार्थतो गुणाः—इति ख० पु० पाठः ।
३. एव लक्षणवाक्यौघो—इति ख० पु० पाठः ।
४. अतोऽर्थेष्वप्येते गुणाः सम्भवन्ति—इति ख० पु० पाठः ।

उक्तं हि—

सचेतनचमत्कारकारिणो यार्थसङ्गतिः ।
युक्तिः सा घटना सैव सोऽर्थः श्लेष इति स्मृतः ॥ इति ।

प्रसादो यथा—

**अयमुदयति मुद्राभञ्जनः पद्मिनीना-**
**मुदयगिरिवनालीबालमन्दारपुष्पम् ।**
**विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्**
**कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥७७॥**

अत्र विशेषो बलादनुक्तोऽपि सूर्यलक्षणोऽर्थः प्रकटमुपलक्ष्यते ।

साम्यं यथा--

**अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-**
**र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।**
**ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी**
**मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥७८॥**

अत्र मधुश्रियो मौग्ध्यत्यागयौवनारम्भकृतानां विशेषाणामवैषम्यात् समता ।

यद् वा—

**च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा**
**मनसि च गिरं ग्रन्थन्तीमे (कि ? गि) रन्ति न कोकिलाः ।**
**अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो**
**न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥७९॥**

प्रक्रमाभेदो ह्यवैषम्यम् । तेनैतदप्युदाहरणम्--

**वर्तन्ते विरहार्तवामनयनावक्त्रेन्दुतन्द्राकृतः**
**केकारम्भचलच्छिखावलगलच्छायाः पुनः श्यामलाः ।**
**एते केतकसूचिभेदविदिनप्राचीमरुद्वीचयः**
**केचित् कारकरीरमेचकघनश्रीवाहिनो वासराः ॥८०॥**

इति ।

अत्र विरहिणीमयूरकेतकबलाहकानां तन्द्राकेकारम्भसूचिभेदश्यामतामात्रमुपवर्णितम् , न त्वरति ( का ? ता )ण्डवविकारसवर्णादीति वर्षर्तुमुखवासरवर्णनस्य प्रक्रान्तस्याभेदः ।

माधुर्यं यथा—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः ।
तावत् प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥८१॥

अत्र रसवत्त्वं प्रकटम् ।

एतदुदाहरणं कान्तौ केचिन्निक्षिपन्ति—"कान्तिर्दीप्तरसत्वम्" इति ।

केचिन्माधुर्यं क्रोधादावप्यतीव्रतामाहुः । यथा—

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥

सौकुमार्यं यथा—

सद्यः पुरीपरिसरेषु शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता ।
गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥८२॥

अत्र सीतासौकुमार्यमुपवर्णितम् ।

केचिदपारुष्यं सौकुमार्यमाचक्षाणाः—

देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे ।
लक्ष्मीसहायस्य तवाद्य वत्स वात्सल्यवान् द्रौणिरयं सहायः ॥

इत्युदाहरन्ति ।

अर्थव्यक्तिर्यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रु बहिः पलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥८३॥

अत्रार्थस्वरूपस्य पूर्णं दर्शनम् ।

यद् वा—

**प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेसरं-**
**विरलविरलैरन्तःपत्रैर्मनाग् गलितं ततः ।**
**तदनु रचनामात्रं किञ्चिद् व्यधायि बहिर्दलै-**
**र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥८४॥**

उदारं यथा—

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।**
**तदवस्था पुनर्देव ना(न्य)स्य मुखमीक्षते ॥ ८५॥**

इति ।

त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते । उक्तं हि—

उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ इति ।

केऽप्यग्राम्यत्वमुदारतामुदाहरन्ति । यथा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वां
ततः शेषं चेत् स्याज्जितमिह तदानीं गुणितया ॥

अस्य विपर्ययो यथा—

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।

इत्येतद् द्वयमपि प्रायः कान्तिग्राम्ययोरन्तर्भवतीति मन्यामहे ।

ओजो यथा—

**उत्तुङ्गाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-**
**स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।**
**आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुव-**
**स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥८६॥**

अत्र भूयसां पर्वतादिपदानां सर्वेषामप्यन्ते भुजधार्यत्वेनैक्यं सम्पन्नम् ।

कान्तिर्यथा—

**मा गर्वमुद्वह कपोलतले चकास्ति**
**कान्तस्वहस्तरचिता मम मञ्जरीति ।**
**अन्यापि कापि सखि भाजनमीदृशानां**
**वैरी न चेद् भवति वेपथुरन्तरायः ॥८७॥**

अत्र नायिकायाः सपत्न्यामीर्ष्यानुबन्धेन प्रतिपादितस्य प्रियतमानुरागलक्षणस्य शृङ्गारस्यौज्ज्वल्यस्य कान्तिः ।

समाधिर्यथा—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥८८॥

अत्रान्यावलम्बनत्वं सुप्रसिद्धम् ।

एतेषां गुणत्वमाक्षिप्य समाधत्ते—

गुणानामर्थनिष्ठानां समाधेर्द्विविधस्य च ।
कथं गुणत्वं वक्तव्यमागमापायिनामपि ॥८६॥
गुणयोगाद् गुणत्वं चेदेतेषां च गुणः स्वकः ।
काव्योपादेयताधानमेतेषां भवतीति चेद् ॥८७॥
परयुक्तं ··· तद् ज्ञेयमवश्यम्भावसम्भवात् ।
तन्नास्ति सर्वथा तेषां गुणत्वमिति केचन ॥८८॥

'गुणानामर्थनिष्ठानाम्' इत्यत्र 'कान्तिवर्जम्' इत्यभिधेयम्, 'अर्थकान्तिविपर्ययनामा रसमात्सृण्यहेतुर्ग्राम्यः' इत्याचार्यनिर्णयात् ।

उच्यते श्रूयतामेतद् रहस्यं काव्यवेदिनाम् ।
अवस्थाद्वयमस्त्येषामुद्भवानुद्भवात्मकम्[1] ॥८९॥
सत्तामात्रेण जायेत दोषलेपनिराकृतिः ।
उद्भवेन पुनस्तेषां काव्यं कविभिरादृतम् ॥९०॥
निर्दोषमपि न श्लाघ्यं निमग्नगुणमण्डलम् ।
यदि नात्र गुणास्तत्र समाधिर्वापि न स्मरेत् ॥९१॥
अलङ्कृतमपि त्याज्यमनुद्भूतगुणोदयम् ।

यथा—

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥८९॥

---

१. मुद्भावा - इति क० ख० ग० पु० पाठः ।

**वैशेषिकान् गुणाना (ह ? हुः) केचिद् दोषान्यथाकृते ॥९२॥**
**केकरत्वं हि नेत्राणां दूषणत्वेन सम्मतम् ।**
**तदेवाकेकराक्षीणां भूषणत्वेन सिध्यति ॥९३॥**
**दोषश्च सकलोऽप्येष कदाचित् कविकौशलात् ।**
**व्युत्क्रम्य दोष (गु ? ग)णनां गुणवीथिं विगाहते ॥९४॥**

यथा—

पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे
तततयज दुदुद्रुतं भभभभाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः
प्रगे प्रहसहेतवे प्रियसखीभिरध्यैयत ॥९०॥

अत्राप्यप्रयुक्तस्यार्थ[स्या]ऽप्रनुकरणेन साधुत्वमुक्तम् । यच्चाशक्तिजन्म साधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यत इति ।

यद् वा—

तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥९१॥

अत्र विरुद्धमपि प्रभावेणेति पदसन्निवेशेन गुणाय जातम् ।

**ओःद्यप्रेषोविस्तराद्या ( न्त्या ? नू यान् ) वदन्त्यपरे गुणान् ।**
**वक्रोक्त्यादिषु सर्वेषामन्तर्भा ( वैः ? वः ) प्रसिद्ध्यति ॥९५॥**

यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनहीनमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥९२॥

दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्री-
स्तुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः ।
मध्यक्षामे वपुषि लभते धाम कूर्पासलक्ष्मीः
श्रोणीबिम्बे गुरुणि रसनादाम शोभां बिभर्ति ॥९३॥

॥ इति चतुर्थं प्रकरणम् ॥



## अथ पञ्चमं प्रकरणम्

अथालङ्कारलक्षणम्—

'काव्ये शोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।

अलङ्कारस्य गुणाद् भेदमाह—

तेषामागन्तुकत्वेन न हानिर्नूपुरादिवत्' ॥९६॥
इयतैव भिदामाहुर्गुणालङ्कारयोर्बुधाः ।

काव्ये शोभाकराः संयोगिनोऽलङ्कारा इत्युक्तं भवति ।
गुणैरेव काव्यशोभायां सिद्धायां किमलङ्कारैरित्यत आह—

आमुञ्चन्ति शरीरेषु गुणवत्सु निसर्गतः ॥९७॥
अलङ्कारान् जनाः शोभामाकाङ्क्षन्तोऽतिशायिनीम् ।

अत्र प्रमाणमाह—

तेषामतिशयोक्तित्वं तदाहुरतिशायनात् ॥९८॥

यदाह वामनः—'काव्यशोभायाः कर्तारो धर्मा गुणाः । तदतिशयहेतवस्त्वलङ्काराः'' ( का०सू०. अधि० ३. अध्या० १. सू० १ २ ) इति ।

अलङ्कारा द्विधा ख्याताः काव्ये शब्दार्थगोचराः ।
अनुप्रासः क्रमश्लेषमुद्रादीपकयुक्तयः ॥९९॥
पठिती गुम्फना चित्रयमके शब्दसंश्रयाः ।
समा श्रुतिरनुप्रासः पदेषु च पदेषु च ॥१००॥
पूर्वानुभवसंस्कारबोधनीयद्यदूरता[1] ।

यथा—

एष राजा यदा राज्यं प्राप्तवान् ब्राह्मणप्रियः ।
तदाप्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥९४॥

---

1. बोधनीया ह्यदूरता—इति भाव्यम् ।

१. काव्यशो०—इति ख० पु० पाठः ।

२. महानिर्न सुरादिवत्—इति क० पु० ग० पु० पाठः ।

यद् वा—

मधुर्मधूनि गान्धर्वं म(न्दि ? दि)रं मन्दिरेक्षणा[1]।
इन्दुरिन्दीवरं दाम काममानन्दयन्ति नः ॥९५॥

यद् वा—

[१]मत्स्यवत्स्यन्दिको मत्स्यवारुणीतरुणीस्तनैः।
संसारः सारहीनोऽपि नायातो यातवामताम् ॥९६॥

अदर्प इव कन्दर्पस्तरला मादृशां मतिः।
असार इव संसारः कुरु मे तदनुग्रहम् ॥९७॥

यद् वा—

अमृतममृतमास्तामिन्दुरिन्दुश्च दूरे
मधु मधु कियदेतत् कौमुदी कौमुदी का।
शिव शिव शिव तस्याः केवलं हारि रूपं
नहि नहि नहि साम्यं भूर्भुवःस्वस्त्रयेऽपि ॥९८॥

"तस्या ( य ? ल )ग्नं भवेद् दूरं यस्य स्वापः प्रजागरः।"

उक्तं हि—

श्रुतिभिर्वृत्तिभिर्वर्णैः पदैर्नामभिरुक्तिभिः।
लाटानामुक्तिभिश्चायं षट्प्रकारः प्रकाशते ॥ इति।

**स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलाकरा ॥१०१॥**
**शब्दानां स्वपदानां वा लाटानुप्रास इष्यते।**

एष्वेवानुप्रासभेदेषु श्लोकानुप्रासोऽप्यन्तर्भूतः। श्लोकानुप्रासः। द्वयोर्द्वयोः ( सु ? स )दृशोक्तिकृतत्वोक्तत्वात्। अत्रैव रसस्यानुगुणवर्णव्यवहारात्मिकाः परुषोपनागरिकाग्राम्याख्यास्तिस्रो वृत्तयोऽपि द्रष्टव्याः।

**शषाभ्यां रेफसंयोगे टवर्गेण च योदिता ॥१०२॥**
**परुषा नाम वृत्तिः स्याद्ध्यस्वन्यैश्च संयुता।**

यथा—

तत्र तोयाशयाशेषव्याकोशितकुशेशया ॥९९॥

**सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ॥१०३॥**
**स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः।**

---

1. मन्दिरेक्षणा—इति भाव्यम्।

१. मत्स्यमत्स्यन्दिको मस्य—इति० क० ख० ग० पु० पाठः।

यथा—

सान्द्रारविन्दवृन्दोत्थमकरन्दाम्बुबिन्दुभिः ॥१००॥

इति ।

**शेषैर्वर्णैर्यथायोगं कथितां कोमलां विदुः ॥१०४॥**
**केलिलोलालिमालानां कुलैः कोलाहलः [1]क्वचित् ।**
**सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ॥१०५॥**
**पृथक् पृथगनुप्रासमुशन्ति कवयः सदा ।**
**क्रियाणां कारकाणां च यथासङ्ख्यनिवेशनम् ॥१०६॥**

वहन्ति वर्धन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥१०१॥

यद् वा—

तस्याः [2]प्रवृद्धालीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः ॥१०२॥

केचिदेनमलङ्कारमर्थगतमपि वर्णयन्ति । तन्निरासार्थमाह—

**(क्रमं) श(ब्दं दुः ? ब्दसु) खेनैव स्वदन्ते नार्थसंश्रयात् ।**

इति ।

**एकरूपेण ( मान ? वा ) क्येन द्वयोर्वर्णनमर्थयोः ॥१०७॥**
**तन्त्रेण यः स शब्दज्ञैः श्लेष इत्यभिधीयते ।**

यथा—

नौश्च दुर्जनवाणी च प्रतिकूलप्रवर्तिता ।
प्रतारणाय लोकानां दारुणा केन निर्मिता ॥१०३॥

यथा—

नमः पतनशीलाय मुसलाय खलाय च ।
कुर्वते स्वमुखेनैव बहुधा (स ? न्य) स्य खण्डनम् ॥१०४॥

---

१. क्व—इति क० पु० नास्ति ।
२. प्रवृद्धा ( लीला )—इति क० ख० ग० पु० पाठः ।

यद् वा—

परेषां फलमुत्पाद्य[१] विशुष्यन् भृशमात्मना।
अहो सुमनसां लोके श्लाघ्यात् स्थानादपि च्युतिः ॥ १०५॥

**साभिप्रायस्य वाक्यस्य वचसोऽपि निवेशनम् ॥१०८॥**
**मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः।**

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः।
संगीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥१०६॥

अत्र निर्माल्यदास( नय ? स )नाभ्यञ्चलोच्छिष्टपदानां गौणवृत्तिव्यपाश्रयेण मुत्प्रदायि ( नात् ? नां ) साभिप्रायनिवेशादियं मुद्रा। एवमादि प्रयोगेषु द्रष्टव्यम्। केचिदेतान् समाधिभेद इति मन्यन्ते, तन्न; [२]तत्रापरोत्कर्षाद्यभिप्रायाभावाद् वचोनिनिवेशनियमाद् मुद्रालङ्कारस्य शाब्दत्वम्।

**एकदेशे निविष्टायाः क्रियायाः कारकस्य वा ॥१०९॥**
**कविभिर्दीपकं (द्रष्टुं ?) प्रोक्तमन्यत्राप्यनुषञ्जनम्।**

यथा—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥१०७॥

यद् वा—

शयितमसकृद् गर्भागारे मुहुर्गतमङ्गणे
स्थितमतिचिरं सौधे वातायने भृशमासितम्।
इति बहुतिथो नीतः कालस्तथापि जहाति मां
नहि मृगदृशो दृष्टिर्द्राघीयसी च विभावरी ॥१०८॥

अस्योपमागर्जितत्वेऽपि[1] शब्दनिवेशिकेशनिबन्धनं शाब्दत्वम्।

**श (ब्दः सा ? ब्दस्य) युज्यमानस्य येन संदंशधर्मिणा ॥११०॥**
**योजना क्रियते युक्तिरिति युक्तिविदो विदुः।**

---

1. गर्भितत्वेऽपि—इति समीचीनम्।

१. ''''पमलमुत्पाद्य—इति क० ख० ग० पु० पाठः।

२. तत्रापरं ( ? ) कर्षा०—इति क० ख० ग० पु० पाठः।

जातिक्रियागुणद्रव्याणां युक्तिः पदार्थविषया यथा—

स्त्रीपुंसमनघं[1]　　　नित्यमानतोऽस्मि ॥१०९॥

स्थलकमलिनीम्—

शैलाधिराजतनया न ययौ न तस्थौ ॥११०॥
साभ्रेऽह्नीव[१] स्थलकमलिनी नाप्रबुद्धां न सुप्ताम् ॥११ ॥

नमामि नित्यं ललितं पुंस्पुरन्ध्रीमयं वपुः ।
यत्र वामः करो रुन्धे दक्षिणं मेखलास्पृशम् ॥११२॥

यद् वा—

इदं वामाय भागाय नमो भूयात् पुर (द्रुहम् ? द्रुहः) ।
वधते मेरुकोदण्डं स्तनभारेण ताम्यते ॥११३॥

यद् वा—

स करः करिवक्त्रस्य दुरितानि हिनस्तु वः ।
सव्येतरविभागस्य गोचरे यस्य न स्थितिः ॥११४॥

**पदपादादिभागानामन्यथाकरणेन यः ॥१११॥**
**पाठः पूर्वोक्तलक्ष्मस्य पठि(तिं)[2] तां प्रचक्षते ।**

यथा—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम् ॥११५॥

(यदि) पाण्डुसुत इत्यत्र स्थाने पाण्डुसु (त ? तं) सुयोधन (मि ? इ) ति पठ्यते, त (दे दे) तदमङ्गलार्थमपि मङ्गलार्थं दुर्योधनस्य भवति ।

**वाक्ये शब्दार्थयोः सम्यग् रचना गुम्भना स्मृता ॥११२॥**

तस्याभिषेके मदनातुराया हस्तच्युतो हेमघटो युवत्याः ।
लुठन् स सोपानपथे करोति ठंठंठठं ठठंठठंठम् ॥११६॥

सेयं ठंठमित्यादेर्निरर्थकस्य पदस्यार्थानुगुण्येन वाक्ये रचितत्वाद् गुम्फना । एत- मपि युक्तौ केचिदन्त (र्जा ? र्भाव) यन्ति ।

1. मनघं—इति समीचीनः पाठः ।
2. पठितीं—इति साधु ।
१. ऽह्नीव—इति क० पु० पाठः ।

**व (र्णा ? र्ण ) स्थानस्वराकारगतिबन्धान् प्रतीह यः ।**
**नियमस्तद् बुधैः षोढा चित्रमित्यभिधीयते ॥११३॥**

तत्र वर्णचित्रेषु चतुर्व्यञ्जनं यथा—

जजौ जो जाजिजिज्जाजी तं ततोऽतितताततुत् ।
भाभोऽभीभाभिभूभाभूरारारिरीररीररः ॥११७॥

एवमन्यान्यपि द्रष्टव्यानि ।

**विभिन्नार्थैकरूपाया या वृत्तिर्वर्णसंहतेः ।**
**अव्यपेतं व्यपेतं च यमकं तन्निगद्यते ॥११४॥**

तत्राव्यपेतमादियमकं यथा—

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।
कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥११८॥

इत्यादीन्यालोच्यानि ।

**अम्लानमालतीमालासुकुमारं मनः कवेः ।**
**मागाद् खेदमिति प्रायः कैश्चिदादृतं पुरा ॥११५॥**

नन्वत्र कथं क्रमस्य शब्दालङ्कारत्वम् ? न (व्य ? ह्य) यमनुप्रासवच्छब्द ( स ?-स्व ) रूपमात्राधीनः, किन्तु शब्दार्थाधीनः[१], शब्दस्येवार्थस्यापि क्रमप्रतीतेः । तस्मादुभयालङ्कारो भवितुमर्हति । न शब्दजनित एवार्थक्रमो विवक्षितः, न त्वार्थः । तद्विवक्षा सामर्थ्यव्यक्तिजात्यादिषु द्रष्टव्या । एतत् पुरस्तादुक्तम् "शब्दमुखेन ( ष ? )व स्वदन्ते, नार्थसंश्रयात्" इति । उक्तमौपनिषदैः— 'देशकालशब्दप्रतीतिकृत पौर्वापर्यं क्रमः' । इह सं (?) स्यार्थव्यक्तिसाम्यजातयः ।

अर्थव्यक्तिक्रमो यथा—

मूले लोलकरीरकन्दलघनाः काण्डे ततः पाण्डवः
किञ्चिन्मेदुरमण्डले परुषि च प्रौढास्थिरूढत्वचः ।
अन्येषूच्छ्रितपत्रगण्डगहनाः सम्प्रत्यमी प्रावृषि
क्षोणायां परितो हरन्ति हलिनां चक्षूंषि बालेक्षवः ॥११९॥

अत्रार्थव्यञ्जनं स्पष्टम् ।

---

१. क० पु० नास्ति ।

साम्यक्रमो यथा—

प्रथममरुणच्छायस्तावत् ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
भवति च पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥१२०॥

अत्रेन्दोरुदयादारभ्य[1] विशेषा (? साम्यस्य भवितुमर्हति । नायं कालकृतो देशानामवयवः । अत्र विशिष्टावयवानुक्रमणं हि विहितम् कालकृतक्रमाणां धर्माणां युगपल्लाभासम्भवात् । तस्मादर्थवृत्तिरुदाहरणमेतत् ।

श्लेषस्यार्थमिति प्रतीतिस्वरूपे वैचित्र्ये सत्यपि शब्दस्वरूपमात्रनिबन्धन ( त ?-तः ) शाब्दत्वम्, "नौश्च दुर्जनवाणी च" इत्यादि, 'परेषां फलमुत्पाद्य' इत्यादिवच्छ्लेषोदाहरणाननु( ? ,भवति, अनेकरूप्येण वाक्येनार्थद्वयाभिधानात् । तथाहि—निर्मितेति क्रिया विशिष्टेन नौकारकेण वाणीकारकेण च प्रत्येकमभिसम्बध्य वाक्यद्वयमापादयति । अथवा शब्दबलात् समुचितनौवाणीसम्बन्धात् पुनरेकाणां (?, वैषम्येण भणनं विद्यते ।

(? मक्रमो यथा—

गङ्गे देवि दृशा पुनीहि यमुने मातः पुनर्दर्शनं
संप्रश्नोऽस्तु पितः प्रयाग भगवन् न्यग्रोध मां ध्यास्यसि ।
तं हारासिलतावतंसविपुलस्थूलांसवक्षोभुजं
पुंभावं भवतामवन्तिनगरीनाथं विदृक्षामहे ॥१२१॥

अत्र शब्दाधीनक्रमत्वं विशदम् ।

जातिक्रमो यथा—

वयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं[2] नारद इत्यबोधि सः ॥१२२॥

अत्र तदवस्थारूपसमर्पणं प्रकटमिति ।

ननु 'प्रथममलसैः पर्यस्ताग्रैः स्थितं पृथुकेसरैः' इत्याद्यर्थव्यक्तेः कथमुदाहरणम् ? कालकृतक्रमत्वात् मेव (? वाक्यमुभयथाप्येकरूपेण वाक्यद्वयेनार्थद्वयभणनं न सम्भवेत् । उच्यते—विशेषणांशस्यार्थद्वयप्रतिपादन शक्तत्वादेतन्निरूप्यते । अवयवे समुदायोप-

१. रम्भ—इति क० पु० पाठः ।
२. दतं—इति क० पु० पाठः ।

चारात् तदेव वाक्यमिति वक्तुं शक्येत । एवं हि निष्कृष्टमाचार्यैः—अनेकानेकार्थोक्तिस्तुल्यविशेषणविशेष्योभया तुल्यसंविधाना च पूर्वत्र प्राकरणिकाप्राकरणिकोभयप्राधान्याच्छ्लेषसंवृत्तितन्त्राणि अपरत्र प्रायः समासोक्तिः ।

प्राकरणिकप्राधान्ये तुल्यविशेषणा यथा—

केवलं बत वा ? व स्वार्थमनःस्तुच्छा बहि(र्ग ? र्गु)णाः ।
वर्तन्ते विधिना सृष्टाः स्त्रियः शणलता इव ॥१२३॥

तुल्यविशेष्या यथा—

च्युतो राज्याद् राजन्यश्च राजानो न च राजतः ।
नवं तवितरं नास्ति रज्यते मित्रमण्डलम् ॥१२४॥

तुल्योभया यथा—

समाक्रम्यापि मूर्धानं समतां महतीं मुदम् ।
कण्टकः पादलग्नोऽपि विदधात्येव वेदनाम् ॥१२५॥

उभयोरपि प्राकरणिकयोः प्राधान्येऽपि प्राकणिकप्राधान्याविशेषा (च्छे ? च्छ्ले)ष एव । यथा—

तनुत्वर (मि ? म)णीयस्य ( ? ) मध्यस्य च भुजस्य च ।
अभवन्नितरां तस्य वलयः कान्तिवृद्धये ॥१२६॥

एकस्याप्राकरणिकत्वा (न्नि ? नि)र्णये द्वयोरपि[1] शब्दोपात्तयोः प्राकरणिकत्वसम्भवः । अत्रापि श्लेष एव ।

वृत्तं कुङ्कुमपङ्कपाटलरुचि प्राप्तं क्रमादुन्नति
सोष्ठप्रस्फुरदंशुकान्तमधिकं पुष्यत् प्रियं चक्षुषः ।
हेमन्ते सुखयत्यरींस्तव शिलातल्पप्रसुप्तान् वने
किं कान्ताकुचमण्डलं नहि नहि प्रत्यग्रबिम्बं रवेः ॥१२७॥

तुल्यविशेषणयोरुभयोः प्राकरणिकयोः प्राधान्येऽपि यत्र नानेकार्थोक्तिः, तत्र न श्लेषः । यथा—

रक्तपाटलसमानसौरभं तस्य पातुमभवत् प्रियद्वयम् ।
मादनं च मधुमत्तषट्पदं पेशलं च विमलं प्रियामुखम् ॥१२८॥

---

१. क० पु० नास्ति ।

अप्राकरणिकप्राधान्ये संवृतिः 'उद्दामोत्कलिका'—दिषु द्रष्टव्या। उभयप्राधान्ये तत्र 'द्वारं खड्गिभिरावृतम्' इत्यादिषु संविधानसाम्यात् समासोक्तिः। 'रामबहुला वनाली' इत्यादिषु। इयमप्यनेकार्थप्रतिपत्तिहेतुत्वादनेकार्थोक्तेर्भिदा। अत्रापि प्रायः शब्दासंकृतौ तात्पर्यातिशये संवृतिः सम्भवेत्। यथा—

**यातोऽस्मि पद्मनयने समयो ममैष**
**सुप्ता मयैव भवती प्रतिबोधनीया।**
**प्रत्यायनामयमितीव सरोरुहिण्याः**
**सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥१२९॥**

ननु—

पुनरुक्तवदाभासश्छेकानुप्रास एव (च)।
अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं च तु॥
उपमा दीपकं चैव प्रतिवस्तूपमा तथा।
इत्येत एवालङ्कारा वाचां केश्चिदुदाहृताः॥

इति पठित्वा ए(क ? व)माचार्या व्याचक्षते—'अत्रालङ्कारा अष्टावुद्दिष्टाः। तत्रादौ चत्वारः शब्दालङ्कारा निरूपिताः। रूपकादीनां चतुर्णाम(त्रा ? र्था) लङ्कारता" इति। तत् कथं दीपकस्य शब्दाश्रयत्वम्? एवंविधानामन्वयानां शब्दनिबन्धनत्वमनालोचयत एतद् वचनम्। स्यादेतत्। पदसन्निवेशमात्रायत्तश्चेच्छब्दालङ्कारस्तत एवानुवृत्ताख्यातस्य दीपकस्यापि परिग्रहश्चेत्, किमित्येकानेकावृत्तविपरिणतैकार्थसमुच्चितकृदभिहिताध्याहृतानपेक्षितैकान्तरनि(मित्त ? रन्त)राख्यातानि (?) मुच्यते[1]।

एकाख्यातं यथा—

'श्रियः पतिः श्रीमति" (१३०) इत्यादि।

अनेकाख्यातं यथा—

**यदेव रोचते मह्यं तदेव कुरुते प्रिया।**
**इति वेत्ति न जानाति यत् प्रियं तत् करोति सा ॥१३१॥**

आवृत्ताख्यातं यथा—

**जयत्यमलकौस्तुभस्तबकितांसपीठो हरि-**
**र्जयन्ति मृगलोचनाञ्चलदपाङ्गदृष्टिक्रमाः।**
**ततो जयति मल्लिका तदनु सर्वसंवेदना-**
**विनाशकरणक्षमो जयति पञ्चमस्य ध्वनिः ॥१३२॥**

---

1. राख्यातानीत्युच्यते—इति समीचीनः पाठः।

विपरिणताख्यातं यथा—

तस्मिन् जीवति [1]जीवामा (?) पञ्चेषुं पञ्चमध्वनिः ॥१३३॥

इत्यादि ।

एकार्थाख्यातं यथा—

विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।१३४।

समुच्चिताख्यातं यथा—"अथ यन्तारमादिश्य" (१३५) इत्यादि ।

कृदभिहिताख्यातं यथा—

"कियन्मात्रं जलं विप्र" (१३६) इत्यादि ।

एकान्ताख्यातं यथा—

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्ते जहृषुः प्लवङ्गाः ॥१३७॥

निरन्तराख्यातं यथा—

प्रेमुर्वल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः ।
आस्फोटयाञ्चक्रुरभिप्रणेदुः…………………………॥१३८॥

इत्यादि ।

एषामत्यन्तशोभाकरत्वहानेः । अत एव हि पुनरुक्तवदाभासोऽपि निरस्तः ।

यथा—

तदाभ्वति (?) निःसङ्गो नाशं कुञ्जरकृत्तिभृत् ।
शितिकण्ठः कालत्सतीशोकानव्यय (?) ॥

इत्यादि ।

। इति शब्दालङ्काराः ।

**उपमारूपकोत्प्रेक्षाव्यतिरेकविभावनाः ।**
**अपह्नुतिभ्रमौ तद्वत् साम्यसंशयसङ्कराः ॥११६॥**
**अर्थालङ्काररूपेण समाख्याताः कवीश्वरैः ।**
**प्रसिद्धेरनुरोधेन यत् परस्परमर्थयोः ॥११७॥**
**यथाकथञ्चित् सादृश्यकथनं सोपमास्मृता ।**
**सर्वात्मनैव सादृश्यं नास्ति भावस्य कस्यचित् ॥ ११८॥**

---

1. जीवामः पञ्चेषुपञ्चमध्वनिः—इति समीचीनम् ।

यथोपपत्ति कृतिभिरुपमानं प्रयुज्यते ।
अखण्डमण्डलः क्वेन्दुः क्व कान्तानां मुखद्युतिः ॥११९॥

यत्किञ्चित्कान्तिसाम्यात्तु शशिनैवोपमीयते ।
भूयोऽवयवसामान्यादुपमा कैश्चिदिष्यते ॥१२०॥

भूयोऽवयवसामान्ययोगो वै पाक्षिको मतः ।

प्रसिद्धेरिति कविसमयप्रसिद्धिर्विवक्षिता । तथा सति हि मनोहारि साधर्म्यमुक्तं भवति । मनोज्ञसाधर्म्यकथनं ह्युपमालङ्कारः । तथाहुः —

यच्चेतोहारि साधर्म्यमुपमानोपमेययोः ।
मिथो विभिन्नकालादिशब्दयोरुपमा तु सा ॥ इति ।

यथा—

'त्वदाननमधीराक्षमाविर्दशनदीधिति" इत्यादि ।

यद् वा— 'नलिन्या इव तन्वङ्ग्याः' इत्यादि ।

निरवयवानां गुणादीनामवयवसामान्यायोगेऽपि तदाश्रयद्रव्यावयवद्वारा उपचरितमवयवत्वम् । अथ वा अवयवसामान्यमित्युपल णम् । यत्किं . द्धर्मयोगो विवक्षितः । तदुक्तं हि—

एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्वित्रिसामस्त्ययोगाऽस्य विचित्रता ॥ इति ।

एतेन 'केतकीगन्धसदृशः पटगन्धः' इत्यादि सिद्धम् ।

सादृश्यं नाम संवित्तिसिद्धं द्रव्यादितः परम् ॥१२१॥

शक्तिसङ्ख्यावदेतत् स्तादिति केचन मन्वते ।

तथाहि—संवित्तिसिद्धं नाम सादृश्यं न द्रव्यम्, गुणकर्मणोरनाश्रयत्वात् । गन्धादयोऽपि हि सदृशबोधगोचरीभवन्ति । कर्माण्यपि कर्मान्तरसदृशबुद्धिबोध्यानि । यथा–

उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने
विन्ध्यवर्त्मसु करेणुगामिनीः प्रेक्ष्य मन्थरदृशो मुहुर्मुहुः ।
विप्रलब्धमनसः समागताः सैनिकैर्जगृहिरे वनद्विपाः (१२९)

इति च ।

अत एव न गुणः, नापि कर्म। अनुवृत्तिप्रत्ययनिवृत्तत्वाभावाच्च न सामान्यम्। समवायस्तु सम्बन्धभूत इति न तत्र सादृश्यान्तर्भावः। विशेषाख्यं तु पदार्थं प्रमाणविदो नानुमन्यन्ते। स हि पृथक्त्वादतिरिक्तोऽपि नानुमातुं शक्यते। पृथक्त्वं हि परमाणूनां स्थूलद्रव्यारम्भलक्षणकार्योन्नेयम्। तदतिरेकिणि तु विशेषे न किञ्चिदनुमानम्। न च परमाणवः पृथक्त्वं लिङ्गनित्यत्वात् कार्यं हि स्यात्, कार्यस्य लिङ्गं परमाण्वाश्रितं पृथक्त्व कार्यमिति, अतः पदार्थान्तरमेवेदं शक्तिसङ्ख्यावच्चेति।

एवंविधस्य प्रमेयान्तरस्य सम्भवे प्रमाणान्तरमुपमानमप्यङ्गीकृतम्। सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम्। दृष्टगोः पुरुषस्य गवयगतं सादृश्यं पश्यतो यद् गोविषयं गवयसादृश्यज्ञान तदुपमानम्। नैतत् प्रत्यक्षम्, तिरोहितेऽपि गवि चक्षुरसन्निकर्षातिवर्तिनि जायमानत्वात्। (न) तत् स्मृतिः, गोदर्शनसमयेऽप्रतीतगवयस्य तत्सादृश्यानुभवानुदयात्। नानुमानम्, लिङ्गाभावात्। एकदेशो हि लिङ्गम्। न च गोगवयगतं सादृश्यमेकदेशः। किञ्च, ज्ञातसम्बन्धनियमश्च हेतुः। न च गोगतेन सादृश्येन किञ्चिदपि गवयवर्तिनः सादृश्यस्य सम्बन्धोऽस्ति। कुतस्तरां तस्य नियमः? कुतस्तमां तदवगतिः? अवयवसामान्यबाहुल्यादनुमानं सम्भवति। गवयसामान्यबाहुल्यभाजनं गोसदृशं प्रति यत एषावधारणा जायते—यो यदवयवसामान्यबाहुल्यवान् स तत्सदृश इति। गां गवयसामान्ययोगिनं स्मरतो गवयसादृश्यमनुमानादु(त्पद्यते)। गवयसामान्यानां सादृश्येनैकार्थसमवेतसमवायलक्षणः सम्बन्धः, ततो नियमस्तदवगतिश्च विद्यत इति। अनया सामग्या[1] (?) उपमानं न भिद्यत इति चेत्, न; सम्बन्धिनियमस्मरणमनुमानोदयकारणम्, न सम्बन्धनियमावधारणमात्रम्। अत्र चावयवसामान्यभाजो गवयस्य सदृशतया प्रतीयमानस्योपमानोत्पत्तिहेतुत्वमिति कारणभेदादुपमानमनुमानाद् भिन्नम्। नार्थापत्तिः, अनुपपद्यमानस्यार्थान्तरस्याभावात्। गवयसादृश्यं विना नोपपद्यत इति चेत्, न; इदं प्रथमसादृश्यमनुभवतः परस्परसादृश्यं विनैतदनुपपन्नमिति कथं पूर्वमेवं व्युत्पन्नम्? शब्दं विना व्युत्पत्तेर्न शाब्दम्। नाभावश्च, तस्य नियतविषयत्वात्—इत्युपमानमन्ये।

गवयसादृश्यज्ञानं प्रत्यक्षं गवयानुभवसंस्कारः सहकारीति प्रत्यभिज्ञावदुभयजत्वेऽप्येतस्य प्रत्यक्षविशेषता न विद्यते। गवयदर्शनाद् गोस्वरूपमात्रोल्लेखस्मृतिराप्तेनाप्रसिद्धसमयस्य गवयागवयप्रतिपादनमात्रचलनमेव। न चान्योपमारूपता। तत् प्रमाणान्तरम्। विपर्ययवादादिभेदेन प्रमाणबहुत्वप्रसङ्गात्। प्रसिद्धसाधर्म्यादप्रसिद्धार्थसाधनमुपमानम्। तत् तदपि नोपमानम्। तथाहि—यादृशो गौस्तादृशो गवय इति श्रुतातिदेशवाक्यस्य (पदे ? वने) गवयमुपलभमानस्य 'अयं गवयः स्वयम्' इत्युपमानफलमित्युच्येत। न तत्र गोवद् गोसदृशो गवय इति प्रथमावगतिर्वाक्यप्रभवा नोपमानम्। यदपि च वनगतस्य गवये गोसादृश्यज्ञानम्, तत् प्रत्यक्षमित्युक्तम्; यापि तस्य गवयशब्द-

---

1. सामग्र्या—इति युक्तः पाठः।

वाच्यता भवति, सापि गवयशब्दप्रयोगानुमानिकी; यस्य शब्दस्य यत्र प्रयोगः, स तद्वाच्य इति सम्बन्धोऽवगतः। वने च संज्ञिन मुपलभ्य तस्यैव सा मया संज्ञावगतेति ज्ञानं स्मरणमेवेति गवयगतसादृश्यदर्शनाद् गोगतसादृश्यज्ञानमुपमानमिति सुष्ठूक्तम्। तस्मादुपमानं प्रमाणान्तरम्, सादृश्यं प्रमेयान्तरमिति।

विन्ध्यवासिनस्तु—'पूर्वव्यक्त्यवच्छिन्नमपूर्वव्यक्तौ प्रतीयमानं सामान्यमेव सादृश्यम्। तदेकशब्दवाच्यम्' इति मतम्। एतदवलम्ब्य सर्वप्रमाणानामुपमानस्पर्शित्वमन्ततः सविकल्पमुपयुक्तम् तच्छब्दोल्लेखि। शब्दस्य च सम्बन्धग्रहणसमयेऽर्थप्रतिपादकत्वात्। तदुत्तरकाले तु तत्सादृश्येनावसेयत्वं कथमप्रत्यक्षमुपमानं स्पृशन्ति ? प्रत्यक्षस्य चोपमानस्पर्शित्वे प्रागेवानुमानमुपमानानुरोधि। तथाहि—स्वार्थानुमाने लिङ्गं तल्लिङ्गिनोऽधिगमहेतुः। तदधिगमश्च प्रत्यक्षादिपूर्वक इति यथा तथेति च व्यपदेशात्। परार्थानुमाने चोक्तमनुमानकारैः—अत्रागमः प्रतिज्ञा हेतुरनुमानम्, दृष्टान्तः प्रत्यक्षम्, उपमानमुपनय इति। शब्दस्य सादृश्यमेव वाच्यमिति तत्स्पर्शित्वं स्पष्टम्। तस्मादुपमानमेव प्रमाणग्राममुपयाति। सादृश्यमेव सर्वस्य व्यवहारपदवीं प्रवर्तयतीति। तदेतदालम्बन उपमालङ्कारो निखिलालङ्कारभूतो विपरिणमत इति मन्तव्यम्।

**उपमानं नोपमेयमनवस्थाप्रसङ्गतः ॥१२२॥**

'तमालनीलनीरदश्यामलं तमः' इति न वक्तव्यम्। एवं सत्यनवस्था स्यादिति यावत्।

**उपमैव तिरोभूतभेदा रूपकमिष्यते।**

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥१४०॥
'अङ्गुल्यः पल्लवान्यासन्' (१४१) इत्यादि।

उपमाया रूपकस्य कुतो भेद इत्यत्राह—

**शब्दः प्रवृत्तिभेदेन भजते भेदकल्पनाम् ॥१२३॥**

**तादात्म्यवृत्तिरत्र स्यात् पूर्वत्र स्याद् विपर्ययः।**
**श्रुत्या सम्बन्धविरहाद् यत् पदेन पदान्तरम् ॥१२४॥**
**गुणवृत्तिप्रधानेन युज्यते रूपकं तु तत्।**

अपि च—

**शब्दोपचारात् तादूप्यं रूपकं कैश्चिदिष्यते ॥१२५॥**

ताद्रूप्यारोपतस्त्वन्यैः शब्दारोपोऽत्र कथ्यते ।
उपमानगुणैस्तुल्यानुपमेयगतान् गुणान् ॥१२६॥
पश्यतामसकृन्न्याय्या तत्र तच्छब्दरूपता ।

अत्र केचिद् विशेषमाहुः—

अलङ्क्रियान्तरोत्पत्तिकारणस्य प्रशस्यते ।
अप्रतीतगुणस्यापि रूपकस्य परिग्रहः ॥

यथा—

'निर्मोकमुक्तमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य ।''(?) इति ।

अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा ॥१२७॥
उत्प्रेक्षामाद्रियन्ते तां प्रायः सादृश्यगर्भिताम् ।

'मध्यन्दिनार्कसन्तप्त' (१४२) इत्यादि ।

यद् वा—

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः ।
ह्रीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥१४३॥

सादृश्यमन्तरेणोत्प्रेक्षा यथा—

'लिम्पतीव तमोऽङ्गानि'
नव दिशः पृथ्वीं करोतीव समां तमः ।
'हरतीव तरूनुच्चैः[1] शीलतेव शिलोच्चयात् ।''
''लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥१४४॥
इतीदमपि भूयिष्ठम्'' इत्यादि ।
'केषाञ्चिदुपमाभ्रान्तिः'' इत्यादि । ''उपमानोपमेयत्वम्'' इत्यादि ।

'यदि लेपनमेवेष्टम्'' इत्यादि । ''कर्ता यद्युपमानं स्यात्'' इत्यादि । 'यो लिम्पत्यनुना तुल्यम्'' इत्यादि । 'यथेन्दुरिव ते वक्त्रम्'' इत्यादि । ''तदुपश्लेषणार्थोऽयम्''—इत्यादि । 'मन्ये शङ्के ध्रुवं प्रायः'' इत्यादि ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ॥१२८॥
अन्यत्रापि प्रयुज्यन्ते यद् वालङ्कृतिसूरिभिः ।

---

१. तरूनुच्चैः—इति क० ख० ग० पु० पाठः ।

यथा—

निपुणं[1] द्रुहिणेनास्या निर्मिते निर्मले मुखे ।
शालीनस्य शशाङ्कस्य मन्ये दैन्यमुपागतम् ॥१४५॥

अपाङ्गभङ्गिरेखा चेदस्यास्त्रस्या[1] मृगीदृशः ।
अवशीर्यदहङ्कारा: शङ्के पङ्केरुहश्रियः ॥१४६॥

तव तन्वङ्गि वदनं विलोक्यैतन्मनोहरम् ।
ध्रुवमेष सुधासूतिर्दधाति शिथिलां धृतिम् ॥१४७॥

शयन्येतस्व[2] ?) वक्त्रस्य वर्णसौरभ्यसम्पदः ।
अन्तः परितपत्येतत् प्रायः पङ्कजमण्डलम् ॥१४८॥

विलोक्य तव वक्त्राब्जं मनोज्ञं मदिरेक्षणे ।
नूनं न्यूनमनाश्चन्द्रो नास्माभिर्ज्ञायते जलैः ॥१४९॥

अत्र केचिद् दैन्याहङ्कारधैर्यपरितापरहितानां पदार्थानामेतद्वृत्तेन वर्णनमन्यथा स्थितस्यान्यथोत्प्रेक्षामाचक्षते । न वयमाचक्ष्महे । अन्यथास्थितस्य कस्यचन प्रकारस्याकथनादत्र केवलं समाधिवर्त्मनोपमैव सूचिता ।

अन्यथा—

स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥१२९॥
आक्रोशत्य (व) जानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥१३०॥
तस्य चानुकरोति··· · · · · · · · · · · ।

इत्येवमादय उत्प्रेक्षाः स्युः । अयं ह्युत्प्रेक्षामार्गः ।

यथा—

चन्द्रः पयोदवृन्दानामन्तरन्तर्निलीयते ।
मन्ये दैन्येन न स्थातुमीष्टे त्वन्मुखनिर्जितः ॥१५०॥

सन्निधौ नलिनं शीतच्छायं तन्वि निशामुखे ।
सङ्कुचत्यनहङ्कारं शङ्के त्वन्मुखनिर्जितम् ॥१५१॥

---

1. ०स्त्रस्तमृगीदृशः—इति साधीयान् ।
2. शयत्यैतस्य—इति सम्यक् ।
१. निपुणां—इति क० पु० पाठः ।

प्रातः पाश्चात्यमचलं त्वरितं याति चन्द्रमाः ।
ध्रुवं प्रवृत्ते त्वद्वक्त्रे हृतधैर्यः पलायते ॥१५२॥

पवनाकम्पितं पद्मं किरति प्रचुरं रजः ।
वमति त्वन्मुखजितं प्रायः शोकाग्निविप्रुषः ॥१५३॥

प्रातः पश्चिमशैलस्य काननानि विगाहते ।
नून न्यूनो वनं याति चन्द्रस्त्वन्मुखलज्जितः ॥१५४॥ इति ।

**शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ॥१३१॥**

**मुख्यस्याधिक्यकथनं व्यतिरेकः स उच्यते ।**

यथा—

चित्रं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम् ।
समानं शशिना किन्तु स कलङ्कविडम्बितः ॥१५५॥

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥१५६॥

यद् वा--१

'अरत्नालोकसंहार्यम्' (१५७) इत्यादि ।

'प्रसिद्धहेतु (वा ? व्या) वृत्त्या' इत्यादि ।

यथा—

'अपीतक्षीबकादम्बम्' (१५८) इत्यादि ।

'असम्भृतं मण्डनमङ्गयष्टेः' (१५९) इत्यादि ।

**( अपह्नुतिरपह्नुत्य किञ्चिदाख्यातम् ? ) ॥१३२॥**

अन्यथा 'क्षीबकादम्बम्' इत्येतावद् वक्तव्यम् । किमर्थं पीतशब्देन तदर्थस्तूच्यते ? पश्चादाक्षिप्यते । ततो नञा निवर्त्यते च । किञ्च, कारणं विना कार्यस्योत्पत्तिविरुध्यते । तत एव हि विरुद्धा विभावनाख्या । एवं सति प्रविरुद्धदोषप्रसङ्गः, सोऽपि सादृश्यावलम्बनेन परिहर्तव्यः । तदाहुः—

क्रियायाः प्रतिषेधे या तत्फलस्य विभावना ।
नेया विभावनैवासौ समाधौ सुलभे२ सति ॥ इति ।

---

१. अत्र कियानपि ग्रन्थभागो लुप्त इति प्रतिभाति ।

२. क० पु० 'सु' नास्ति ।

तस्मात्—

अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम् ।
अनलक्तकताम्राभामोष्ठलेखां च बिभ्रतीम् ॥

इत्यादिः सम्यगेन पिञ्जरत्वादिनोपमानेन स्वाभाविकस्य पिञ्जरत्वादेरुपमेयस्याभेदाध्यवसायोऽतिशयोक्त्या द्रष्टव्यः। स्यादेतत्। 'णमह अवड्ढिअतुङ्गम्' इत्यादि। अत्रोपश्लोक्यगुणानित्यत्वप्रतिपादनार्थं कारणनिवृत्तिरवश्यं वक्तव्या। केनचित् सादृश्यस्य कृते तथा सति हीनतैव स्यादिति। एवं चेत् स्वभावतस्तुङ्ग इत्येतावता पूर्यते। तस्मादवहितेन केनापि वर्धितः स्वभावतस्तुङ्ग इत्युक्तौ न दोषः।

किञ्च, एतच्छब्दनिरूपणापतितमेतत् सादृश्यम्। तथा हीदमिह सम्प्रधार्यम्—नञ्समासः किं पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानः, उभयपदार्थप्रधानः, अन्यपदार्थप्रधान इति; नाद्यः, नञोऽसत्त्ववाचित्वान्न लिङ्गसङ्ख्यायोगः समः समासार्थस्य। वाचनिको[1] परवल्लिङ्गताप्येकदेशितत्पुरुषे स्थापितत्वान्न प्राप्नोति, ततश्चालिङ्गसङ्ख्यमव्ययमित्यब्राह्मण इत्यस्याप्यव्ययत्वमपि स्यात्।

स्यादेतत्। अभावस्याश्रयापेक्षत्वात् तदाश्रिते लिङ्गसङ्ख्ये भविष्यत इति. न; अवर्षा हेमन्तोऽनर्थः स्त्रीत्यादिषु हेमन्ताश्रयलिङ्गसङ्ख्याप्रसङ्गात्। अथोच्येत—यदा स्व(स)त्तासामान्ये वर्तमानो नञ् ब्राह्मणादिना विशेष्यते ब्राह्मणत्वेन सद्रूपान्तरेण सन् क्षत्रियादि(र)ब्राह्मण इति, तदा समासे नञ्वाक्येऽप्यर्थमसत्त्वरूपमाचक्षाणोऽपि सत्त्वरूपमाचष्टे। यथा—कश्चित् कदाचित् क्वचिदनर्थवानपि कदाचित् क्वचिदर्थवान् भवति।

ननु विषममेतदुदाहरणम्, धर्माधर्मौ नियामकौ स्तः। का वृत्तवृत्तिवाक्ये इति चेत्, न; वाक्ये सत्त्ववचनस्य वृत्तौ सत्त्ववचननियमानुपलम्भात्। तर्हि शब्दस्य स्वभाव एव नियामको हि स्वीक्रियताम्। अगतिका गतिः स्वभावाश्रयणम्। किञ्च, अस्मिन् पक्षे नञ्सूत्रेणा(प्र)वादेनास्याव्ययीभावस्य (वो ? बा)धितत्वादमक्षिकमित्यादि सिध्यति। [2]तस्य मुक्षिकमित्यादिरवकाशः (?)। उत्तरपदार्थस्याप्राधान्यादुपसर्जनत्वात् तदादिसर्वनामकार्यप्रसङ्गः। ततोऽसोऽसर्वस्मा इत्यादि न सिध्येत्।

अस्तु तर्हि द्वितीयः। यद्येवम् 'अब्राह्मणमानय'इत्युक्तौ ब्राह्मणमात्रस्यानयनं प्राप्नोति, यदुत्तरपदार्थप्रधानता तत्र हेतुः, इहापि। तर्हि 'राजपुरुषमानय' इति पुरुषमात्रस्यानयनं प्राप्नोति, अस्त्यत्र विशेषः। राजा विशेषकः प्रयुज्यते. इहापि; तर्हि नञ् विशेषकः प्रयुज्यते। कथं नञ् नामविशेषकः स्यात्? अनियतगुणस्य गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते, न तदुपघाताय। नञा च ब्राह्मणार्थः प्रतीयमानः सर्वात्मना प्रतिषिध्यत इति कथमसतः प्राधान्यं स्यात्? तस्मादुत्तरपदार्थप्राधान्यमिच्छत-

1. वाचनिकः—इति समीचीनम्।
2. तस्यामक्षिक०—इति सम्यक्।

स्तस्मिन् विषये नञनर्थकः। अन्वाख्यानात् तु साधुत्वम्। एवम्भूतस्यार्थवदनर्थकावयवस्य समासस्येति ब्राह्मणाब्राह्मणशब्दयोः पर्यायत्वं वाच्यं स्यात्। ततो ब्राह्मणमात्रस्यानयनं प्राप्नोति।

भवतु तृतीयः, द्वन्द्वेऽप्येकार्थीभावस्याङ्गीकरणात् तस्य विरुद्धयोः कः प्रसङ्गः? अथ मतं तेजस्तिमिरवद् भवति। तथापि स्वतन्त्रपदार्थद्वयानवगमात् तदुभयप्राधान्यं नाशङ्कनीयम्।

चतुर्थस्तर्हि न विद्यते, न इह जातिमात्रपरे ब्राह्मणशब्दे, न विद्यते ब्राह्मण्यमस्येति सोऽब्राह्मणः क्षत्रियादि(रि)त्यन्यपदार्थप्रधाने समासे सति नाप्राप्ते बहुव्रीहौ नञ्स्यारम्भादनेन तस्य बाधनादब्राह्मणको देश इत्यादि न सिध्यति। नहि प्रवृत्तिनिवृत्तिमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वयं समासः, न तद्विशिष्टेष्विति नियामकमस्ति किञ्चन। 'अवर्षा हेमन्तोऽनर्थः स्त्री, असः अनस्मा' इत्यादीनि न सिध्यन्ति।

अवतरतु ( हि ? तर्हि ) द्वितीय उत्तरपदार्थप्रधान एव पक्षः। ननूक्तं नञा प्रतिषिद्धत्वादुत्तरपदार्थस्य कथमस्तः प्राधान्यम्? प्रतिषेधानङ्गीकरणेन प्राधान्ये ब्राह्मणाब्राह्मणयोः पर्यायता स्यादिति।

उच्यते, इदं तावद् विचार्यम्—कथं नाम नञा प्रतिषेध उत्तरपदार्थस्य? किमुत्तरपदार्थस्वरूपस्य, किं तद्वाचकस्य, किं तत्सम्बन्धस्य, किं तत्प्रतीतेः? नाद्यः, नहि सन् नञा निराक्रियते, विघ्नस्येव मन्त्रस्य। नञो नहीदृशमाहात्म्यमस्ति। अस्ति चेद् राजानो [1]हस्त्यश्वनस्मिन्म्युः (?), [2]अष्टाने गरिपौनेत्येव ब्रूयुः (?), नापि द्वितीयः, सति निवृत्ते प्रवृत्तस्य वाचकस्य का नाम निराक्रिया? अत्राश्रावणप्रसङ्गात्। न शक्तिद्वारा शक्तेः प्रतिबन्धो नाशो वा निराकरणम्। नाद्यः, प्रतिबन्धिशक्तिकस्य प्रयोगे वैयर्थ्यात् प्रीतिप्रसङ्गाच्च।

नापि द्वितीयः, पुनः सर्वत्र तेन तदर्थाप्रतिपादनात्। किञ्च, सम्बन्धापरनामधेयशब्दशक्तिः सिद्धा निषिध्यते।

अनेन [3]तत्सम्बन्धस्ये( ध्वतपि ? ति )तृतीयः पक्षोऽपि प्रत्युक्तः।

नापि चतुर्थः, प्रतीतिर्जाता चेत् कथं बाध्यते? अजाता चेत् किमर्थो बाधः? अजननार्थश्चेत्, केयं राजाज्ञा? करणे सति कार्यं जायमानं केन वा वार्यते? प्रतिबन्धकप्रध्वंसवत्सम्भवात्र शक्तेः कार्यानुत्पाद इति चेत्, पूर्वमेवात्र दत्तमुत्तरम्। तस्मात् सर्वथा नञोत्तरपदार्थस्योपघात इति (न) समञ्जसम्।

1. हस्त्यश्वनैरस्म्युः—इति समीचीनः पाठः।
2. अष्टानेऽगरिपौ नेत्ये—इति सुष्ठुतरः पाठः।
3. तत्सम्बन्धस्येत्यपि—इति सन्दिग्धः पाठः।

स्यादेतत्। नञोप(श्लि)ष्टो ब्राह्मणः स्वार्थमुक्त्वा क्षत्रियाद्यर्थं प्रतिपादयति, स एवोपघात इत्युच्यत इति. न; किमत्र नञ् तस्यापूर्वां शक्तिं करोति? अथवा कार्योत्पत्तिदानेन सतीमभिव्यञ्जयति? नाद्यः, अशक्तस्य केनचित् पाषाणस्याप्यङ्कुर-जनने शक्त्युत्पादनप्रसङ्गात्। द्वितीयश्चेदङ्गीक्रियते। किन्तु नञो न (कश्चिदुप-घातकत्वेत्तामनोत्तरपदार्थस्यासत्त्वादप्राधान्या। न च प्रधाने वा ब्राह्मणयोर्न पर्यायत्वं च। ?)[1] स्यादेतत्। कथमेकस्य द्वे शक्ती इति। को दोषः? अनेकशक्तयो भावविशेषण-शब्दाः। तस्मादर्थस्य प्रवृत्तिवत् स्वाभाविकीं निवृत्तिमप्यभिदधाति। ततोऽब्राह्मण इत्यब्राह्मणशब्दः क्षत्रियादौ स्वाभाविकीं ब्राह्मण्यनिवृ(त्त्य?त्ति मभिदधाति। स्वाभा-विकी चेत्, अर्थनिवृत्तिः। किमर्थं च तत्प्रत्यायनाय शब्दः प्रयुज्यते? व्यवहाराङ्गमर्थ-प्रत्यायनम्, तद् भाववदभावेऽपि भवति।

अत्र परमेतावत्—प्रवृत्तिप्रसङ्गाभावात् स्वाभाविकी निवृत्तिः किमिति [2]प्रतार्यत (?) इति। इह कदाचित् पुरुषः साधारणधर्मदर्शनात् क्षत्रियं ब्राह्मणं मन्यते। पुनरेनं निर्जायाब्राह्मणशब्देनात्र तात्त्विकब्राह्मण्यनिवृत्तिं प्रतिपादयति। अयमेवार्थः स्वतः सिद्धः। कीलकप्रतिकीलकमत्र नञ् निपातो द्योतयति।

अयमर्थः—केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मण-माचष्टे। नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिनिमित्तेनाध्यारोपितम्। ब्राह्मण्यं तु तात्त्विकमिति द्योत्यते। (तदेव मुख्यो ब्राह्मणशब्दोऽर्थो निवृत्तिः?)[3] 'न त्वमुख्यः क्षत्रियादिरिति न ब्राह्मणमात्रस्यानयनम्, नापि न कस्यचिदानयनमिति सिद्धम्। तस्मादब्राह्मण इत्युक्ते ब्राह्मणसदृशः प्रतीयते। अधीतावधितादयोऽपि तत्सदृशानेव प्रत्याय-(स? य)न्ति। सादृश्यात् पीतादिव्यतिरेकेण क्षीबत्वादेः प्रसिद्धो हेतुश्च व्यावृत्तो भवति। यदा भेदाग्रहेणातस्मिंस्तच्छब्दप्रवृत्तिर्निर्ज्ञाताव(यव?)स्थायां द्योतकवशात् सादृश्य-मात्रमवलम्ब्यते, तन्मूलं गुणं चाभिधीयते[4] तदा विभावना। यदा भेदग्र(ह? हे)ण सादृश्य(त्त?)मात्रादतस्मिंस्तच्छब्दवृत्तिकं तन्मूलं गुणं च नाभिधीयते[5], तदा समस्तरूपकम्। (ये मामृते? येषां मते) गुणसमुदायवर्तिनो ब्राह्मणादयोऽन्वयवेऽपि

---

1. कस्यचिदुपघातकत्वम्, तथोत्तरपदार्थस्यासत्त्वादप्राधान्याच्च प्रधाने वाब्राह्मणयोर्न पर्यायत्वं च—इति साधिष्ठः पाठः।
2. प्रतीयत इति—इति सुष्ठुतरः पाठः।
3. कोष्ठान्तरगतः पाठः समीचीनः।
4. चाभिधत्ते—इति भाव्यम्।
5. नाभिधत्ते—इति भाव्यम्।

गुणान्तरप्रवृत्तिद्वारा तमेवार्थं द्योतयन्तीति। तेषामपि पक्षे अब्राह्मणापीतत्वादीनां गौणत्वं स्फुटमिति विभावनायाः सादृश्यवत्त्वं सिद्धम्। अलङ्क्रियान्तरोत्पत्तिकारणस्य कथं सादृश्यस्पर्शित्वम्? त्रिविष्टपस्य विटस्य च केन सादृश्यम्? ललाटिकाकारणेनेति चेत्, (त्रिविष्टपस्य) विटत्वे सिद्धे मन्दाकिनी ललाटिकयोपमीयेत। अन्यथालङ्क्रियान्तरोत्पत्ति-हेतुत्वं रूपकाद् व्यपेतम्। तस्या ललाटिकयोपमेयत्वप्रती(ति? ते) स्त्रिविष्टपविट(प?)स्य तत्त्वसिद्धिरितीतरेतराश्रयत्वम्, न विशदायतरेखाप्रसाधितत्वमात्रेण रूपकत्वसिद्धिः। तत्र विटत्वे निष्पन्ने ललाटिकामन्दाकिन्योरुपमानोपमेयभावो व्यज्यत इत्यदोषः। पश्चाद् रूपणाहेतुर्गुणः स्पष्टतम इति अप्रतीतगुणस्यापीत्युच्यते। अत्राप्रतीतगुण इत्येतावदेव, (व?) न त्वविद्यमानगुण इति। तथा सति गुणाभावादारोपणमेव न स्याद्, उपमाया रूपकहेतुत्वादिति विपर्ययः किं स्यादिति। (उपमाया [1]रूपाभेदावलम्बिन्या न [2]रूपकोत्कयोश्चित् सादृश्यान्न किञ्चिदन्यद् भवति, कस्यचिदसत्त्वेन[1] तद्गतास्तद्गता इव [3]भवतीति वक्तुं शक्यम्। (?) धर्मयोः सादृश्याद् धर्मिणोरैक्य-मापादयितुमशक्यमिति।

अलङ्क्रियान्तरोत्पत्तिकारणस्येति बहुव्रीहिरिति केचित्। तन्मतेऽप्रतीतगुणस्येति न युज्यते। कथं तर्ह्युत्प्रेक्षा?

साम्यरूपविवक्षायां वाच्येवाद्यात्मभिः पदैः।
अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्विता ॥

इत्युक्तत्वात्।

उच्यते—एतत् सममिति वक्तुं यदा नेष्यते, तदा साम्यरूपविवक्षा, न तु साम्यस्यात्यन्ताभावः। अत एव सादृश्यगर्भितत्वम्।

ननु लक्षणे प्रायःशब्देन कदाचिदसादृश्येऽप्युत्प्रेक्षा। यथा—'लिम्पतीव तमोऽङ्गानि' इत्यादि। अत्र महता प्रपञ्चेन सादृश्यं निराकृतम्। उच्यते—सत्यं समाधि-गर्भितैवमुत्प्रेक्षा। सादृश्यं तत्क्रियारोपात् स्फुरिते समाधौ। (इ) वेनापरमार्थकत्व-द्योतकेनानुद्भूते स्फुरत्युत्प्रेक्षा। उक्तमौपनिषदैः—"आरोपाद्योतने निर्वाहः समाधिः, द्योत (ते? ने) पुनरुत्प्रेक्षा' इति। तस्मादस्याः समाधिरासन्नः। सादृश्यस्य समाधि-कारणा(नु) प्राणितः स्पर्शोऽप्यस्या वक्तुं युक्तः। अत एवोक्तम्—

"सम्भावनमथोत्प्रेक्षा (सादृश्यं? प्रकृतस्य) समेन यत्।" इति।

द्योतकाभावेऽपि निर्वहणे भवत्युत्प्रेक्षा। यथा—

---

1. रूपकाभेदा०—इति समीचीनम्।
2. रूपकोपमयोश्च—इति समीचीनः पाठः।
3. भवन्तीति—इति मान्यम्।
१. सत्त्वेन—इति क० ख० ग० पु० पाठः।

**चन्दनासक्तभुजगनिश्वासानिलमूर्छितः ।**
**मूर्छयत्येष पथिकानसौ मलयमारुतः ॥१६०॥**

इत्यस्मिन् वाक्ये उपमानसन्निधानात् समाधिगर्भभावः। 'उपमेयमात्रवचनात् समाध्युक्तिः' इति स्मृतेः। अत्राशीविषनिश्वास इव मलयानिलो मूर्च्छतीति हि तात्पर्यात्।

एतदपह्नुतिरौपम्यवत्यनौपम्या चेति द्विधोच्यते। त (त्र) अनौपम्यवत्यु-दाहरणम्—

**राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः।**
**अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम् ॥१६१॥**

**कस्स व ण होइ रोसो दट्ठूण पिआअ[1] सव्वणं अहरं ।१६२।**

इत्यादि।

अनयोः कः सादृश्य[2] इति। अत्राप्यनुरागशीतानिलयोर्भ्रमरभुजङ्गयोश्च सादृश्यं विद्यते। एतत्कार्यजनकत्वं साधारणो धर्मः। अन्यथा अपह्नोतुमेवाशक्यत्वात्—

**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामपि ।१६३।**

इत्यादिष्वप्यनया दिशा निर्वाह्यम्।

ननु मीलितोक्तिसमासोक्तिसहोक्त्यर्थान्तरोक्तयः किमित्यत्र नोक्ताः, न उक्ति-प्राधान्याद् वक्त्रोक्तौ तासां विनिवेशः।

अपह्नुतिमीलितयोः किमन्तरम्? वस्तुना वस्त्वन्तरस्य तिरस्कारमात्रं निमीलिते अपह्नुता (व) पह्नुताभिप्राय इति चेत्,

**पाअडिअणेहसब्भावविब्भमं तीअ जह तुमं दिट्ठो ।**
**संवरणवावडाए अण्णो वि जणो तहच्चेअ ॥१६४॥**

इत्यस्य 'राजकन्यानुरक्तम्' इत्यस्य च को भेदः? उभयोरपि कस्यचिदपह्नवा-दिति, निमीलिते किमपह्नुत्य किं प्रदर्श्यते विशिष्टाया दृष्टेरनुरागं हेतुमपह्नुत्य स्वभावः प्रतीयत इति चेत्, न; प्रतिपाद्यसादृश्यायाम्, अत एवानौपम्याख्यायामपह्नु-तावपह्नवहेतुरवश्यमभिप्रेयः, अपह्नोतव्यवस्तुन एव प्रतीयमानत्वा(द ?)भ्युपगमात्। यथाह भोजराजः—

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।
औपम्यवत्यनौपम्या चेति सा द्विविधोच्यते ॥

---

1. पिआइ—इति समीचीनः पाठः।
2. किं सादृश्यम् –इति समीचीनम्।

वाच्ये प्रतीयमाने च साहश्ये प्रथमा तयोः ।
तथाभूते द्वितीया स्यादपह्नोतव्यवस्तुनि ॥
अनौपम्यवती भूयः पूर्वापूर्वा च कथ्यते । इति ।

प्रस्तुतार्थसाधनपरायां (अ) र्थान्तरोक्तेरौपम्यार्थतात्पर्याभावात् साध्यते भिदा, यथा—

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥१६५॥

इति वचनसहोक्तेः साम्यान्तर्भावः, विसदृशेष्वपि तस्याः सम्भवात् । सह क्रियांशः साधर्म्यम्, तद् विसदृशेष्वपि वर्तते । यथा—

सह दीर्घा मम श्वासैरर्जायन्ते हन्त रात्रयः ।१६६।

इति चेत्, नेदानीं स साध्यते, सिद्धसाधर्म्यादीनां[1] हि [1]साधर्म्यम् । (?) यथा—

मृगं मृगाङ्कः सकलं सदायं बिभर्ति तस्यास्तु मुखं कदाचित् ।
कपोलपत्रे मृगनाभिपत्रमियान् सखे तस्य ततोऽपकर्षः ॥१६७॥

इत्यादि ।

निदर्शनादेरप्यत्रैवान्तर्भावः । यथा—

पाणउडीअवि जलिअण हुअवहो जलइ जण्णवाडम्मि ।
णहु दे परिहरिदव्वा विसमदसासट्ठिआ पुरिसा ॥१६८॥

इति ।

वितर्काख्यस्योहस्य संशयानुवेशः । स्मृत्यादेर्नालङ्कारता, अतिशयाधानहेतुत्वाभावादिति ।

**अत्रैवान्तर्गताः काश्चिदनुक्ता अप्यलङ्क्रियाः ।**
**शब्दादिवादेरुचिताद्धि(दिभिर्वि ?)शिष्टोऽर्थः प्रतीयते ॥१३२॥**

**इत्यत्राचक्षते केचिदुपमायुभयाश्रयम् ।**
**नञादिशब्दैरुचितैरिवादिभिरिवोपमा ॥१३३॥**

---

1. साधनम्—इति युक्तः पाठः ।

१. दीनं इति क० पु० ग० पु० पाठः ।

[अर्था] लङ्काररूपा किं न भाव्येत विभावना ।
विशिष्टगुम्फनात् तुल्यमुभयोरपि कल्पितम् ॥१३५॥

तयोर्हि स्वदते शाब्दो गुणालङ्कार एव वा ।
अतःपरमलङ्काराः प्रोच्यन्ते नोभयाश्रयाः ॥१३६॥

जातिरित्यादयो याश्च वक्ष्यन्ते प्रोल्लसद्भिदाः ।
वक्रोक्त्योऽभिधास्यन्ते याः समस्ताश्च ताः पुनः ॥१३७॥

[1]+ + + + 'केचिदलङ्काराः काव्ये शोभाकरत्वतः ।
केचिदर्थानलङ्कारानुक्तिसौष्ठवतत्पराः ॥१३८॥

वक्रोक्तित्वेन मन्यन्ते विगानं तासु नास्ति नः ।
आमनामो वयं तास्ताः संज्ञया लोकसिद्धया ॥१३९॥

किं चास्ति भेदो लेशेन ऋजूक्तावप्यलङ्क्रिया ।
वक्रोक्तावेव वक्रोक्तिरिति साहित्यपारगाः ॥१४०॥

इत्यलङ्कारमार्गोऽयं सङ्क्षेपेण प्रकाशितः ।
आलोच्य बहुशो भावं काव्यलक्षणकारिणाम् ॥१४१॥

ननु रसवन्नामधेयः प्रधानालङ्कारः, तस्य ह्येतदुदाहरणम्—

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥१६९॥

अत्रेर्ष्याविप्रलम्भविरहविप्रलम्भशृङ्गाराभ्यां स्वतिरोधानोपकृतः सम्भोगशृङ्गारो नायिकानिष्ठो निबद्धः । तथापि 'कथमपि कृतप्रत्यापत्तौ प्रियः' इत्यत्र विभागे विरह-विप्रलम्भपूर्वकप्रियतमचित्तसाम्मुख्यतः सम्भोगशृङ्गारः सूचितः । स्खलितोत्तर इति तु

1. एव—इति भाव्यम् ।

सञ्जातगोत्रस्खलितत्वात् प्रेयसो नायिकायामीर्ष्याविप्रलम्भशृङ्गारो निबद्धः। पुनश्च विरहकृशयेत्यादिभिः पदैरवहित्थेन भावेन नायिकायामीर्ष्याविप्रलम्भशृङ्गारं प्रच्छाद्य सम्भोगशृङ्गारेण चित्तोल्लाससूचितेन वाक्यार्थसमाप्तिः कृता। तथाहि—'विरहकृशया' इत्यादिना पादेन नायिकागतो मन्युरवच्छाद्योपदर्शितः। 'असहनसखी' इत्यादिभिस्त्रिभिः (नोऽनुनु) गोत्रस्खलितस्य सखीश्रोत्रप्राप्तिविरहविप्रलम्भकारणत्वेनाशङ्कय दृष्टिं परावृत्य सखीजनशून्ये गृहे परिष्टष्टे यत्तु नायिकायाः समुच्छ्वसितम्, तदुपनिबन्धात् सम्भोगशृङ्गारेण वाक्यार्थो निर्वाहितः। तदेवमत्र सम्भोगस्य विप्रलम्भबाधेन लब्धस्योपनिबन्धाद् रसवत्त्वमलङ्कारः।

उच्यते—न खलु काव्य [स्य] रसानां [१]चालङ्कार्यालङ्करणभावः, किन्तु शरीर [शरीरि] भावः। रसा हि काव्यस्यात्मत्वेनावस्थिताः। शब्दार्थौ च शरीर-(प?) तया[1] (यथा ह्यात्मतया[2]?) यथा ह्यात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते, तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते। तस्माद् रसानां काव्यशरीरभूतशब्दार्थविषयतयात्मत्वेनावस्थानम्। केषाञ्चित् पक्षे फलरूपत्वेन वा, न कदाचिदप्यलङ्कारतया। तर्ह्यत्र श्लोके कोऽलङ्कारः? न कश्चित्। कथं तर्ह्यस्य काव्यत्वम्? गुणसंस्त्यीयमानशब्दार्थत्वेनात्र माधुर्यौजोभ्यामुपसंहितौ रसौ प्रस्थितः प्रसादो हि प्रभवति। तावतैव काव्यत्वं पूर्यते। [3]काव्यत्वे (न?) हेतवो गुणा नित्याः, तदतिशयमात्रहेतवोऽलङ्कारा इति हि निर्णीतम्।

॥ इति पञ्चमं प्रकरणम् ॥



1. शरीररूपतया—इति समीचीनम्।
2. ह्यात्मतया—इति सुष्ठु।
3. काव्यत्वेन—इति सुष्ठुतरः पाठः।
१. चालङ्करण—इति क० पु० पाठः।

## अथ षष्ठं प्रकरणम्

कान्तया गुणशालिन्या सर्वालङ्कारयुक्तया ।
किं फलं [1]कामयानस्य यदि न स्याद् रसावहा ॥१४२॥

तद्वद् गुणोत्तरं काव्यमलङ्का(र ? रि)रसो(ज्झि ? ज्झि)तम् ।
नात्यन्तमादृतं प्राज्ञैरापानप्रीतिमात्रदम् ॥१४३॥

तस्माद् रसस्य बीजं च रूपं च सहकारि च ।
उपयुक्तं यदन्यच्च तत् सर्वमपि भण्यते ॥१४४॥

तत्र प्रथमं बीजमाह—

स भावो रसनीयत्वं ्यत्प्रकर्षः प्रपद्यते ।
[1]यत्प्रकर्षो रसत्वाभवत् (?) स चित्तवृ..विशेषो भावः ।
प्रधानगुणभावेन स द्विधा परिकीर्तितः ॥१४५॥

प्रधानाः स्थायिनो ह्यष्टावितरे सहकारिणः ।
अप्रधाना द्विधा भावा बाह्या(भ्य)न्तरभेदतः ॥१४६॥

बाह्यात् सत्त्वात् प्रभूता ये सात्त्विका अष्ट कीर्तिताः ।
आभ्यन्तरास्त्रयस्त्रिंशत् प्रसिद्धा व्यभिचारिणः ॥१४७॥

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥१४८॥

यथा रुमायां निक्षिप्तं सर्वं लवणं सम्पद्यते, तथास्मि(न्न ? न्नि) विष्टं सर्वमेतद्-रूपतां प्रतिपद्यत इत्यर्थः ।

कथं विरुद्धानां प्रवेश इत्याह—

विरुद्धा अपि योज्यन्ते कदाचित् कविकौशलात् ।
आश्रयान्तरसम्बन्धाच्छोभां दधति भूयसीम् ॥१४९॥

---

1. उद्दङ्कितः पाठः साधिष्ठः, (?) एवन्तु न समीचीनम् ।
१. काय—इति क० पु० पाठः ।

माधवस्य रतिं यद्वद् विरुद्धैरप्रबाधिताम् ।
भवभूतिः श्मशानाङ्के जगाद रसिकप्रभुः ।१५०।

यथा—'मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मनः संस्कारस्यानवरतप्रबोधात् प्रतायमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम् । तथाहि—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च ।१७०।

इत्यादि ।

अत्र प्रकरणे बीभत्सादिर्नायिकापरिहारेण प्रेतरङ्काद्यालम्बनत्वेनोपवर्णितः ।

यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डद्या[१]वयवसुलभान्युग्रपूतीनि जग्ध्वा ।१७१।

इत्यादि ।

क्वचित् साक्षादाश्रयेऽपि शोभत इत्याह—

क्वचिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि ।
कान्ताविलोचनन्यस्तं[२] [३]मलीमसमिवाञ्जनम् ॥१५१॥

यथा—

मलिणवसणाणकअवे णिआण आपस्सु[४] गोढ पालीण ।
पुप्फवईअणकामो अग्गे सुकयाउहो वसइ ॥१७२॥

यथा नराणां नृपतिः शिष्याणां (च) गुरुर्यथा ।
एवं च सर्वभावानां भावः स्थायी महानिह ॥१५२॥
रतिहासौ तथोत्साहविस्मयौ च क्रुधाशुचौ ।
जुगुप्सा भयमित्यष्टौ स्थायिनो रसहेतवः ॥१५३॥

रतिर्यथा "हरस्तु किञ्चित्परिवृत्तधैर्यः" (१७३) इत्यादि ।

---

१. पीठा—इति क० ख० ग० पु० पाठः ।
२. न्यस्यं—इति क० पु० पाठः ।
३. मलीमस—इति क० पु० पाठः ।
४. आपस्सु—इति क० पु० पाठः ।

एवमन्येषामप्युदाहरणानि द्रष्टव्यानि । रत्यादयः प्रसिद्धलक्षणा इत्यत्र नोच्यन्ते ।

रजस्तमोभ्यामस्पृष्टं　मनः　सत्त्वमिहोच्यते ।
तस्माद् (भवन्ति) ये भावाः सात्त्विका अष्ट कीर्तिताः ॥१५४॥

( इति ते स्मृताः । ? )

स्तम्भस्तनूरुहोद्भेदो　गद्गदः　स्वेदवेपथू ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका गुणाः ॥१५५॥

अस्मिन्नभिन्नवदवभासमानयोः स्तम्भप्रलययोर्भेदं प्रकटयति—

स्तम्भश्चेष्टाप्रतीघातः　प्रलयो　नष्टचेष्टता ।
..............　मद्योद्येति　तयोर्भिदा ॥१५६॥

( स्तम्भो यथा— )

नादस्तावद् विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलयन्गमङ्गं
गात्रस्तम्भः स्थगयति गतिं कः प्रकारः किमेतत् ॥१७४॥

प्रलयो यथा—

ण कओ बाह्विमक्खो णिव्वण्णेउं पि ण चइअं रामसिरं ।
णवर पडिवण्णमोहा गअजीविअणीसहा महिम्मि णिसण्णा ॥१७५॥

यद् वा—

तह णिमिअच्चिअ दिट्ठी मुक्ककवोलविहुरो उरच्चेअ करो ।
गअजीविअणिच्चट्ठा णवरत्था महिअल थणभरेण गआ ॥१७६॥

विविधं[1] ह्याभिमुख्येन　स्थायिधर्मोपजीवनैः ।
स्वधर्मस्यार्पणेनेति　चरन्ति　व्यभिचारिणः ॥१५७॥

स्मृतिर्वितर्क उत्कण्ठा चिन्ता चपलता मतिः ।
गर्वः स्नेहो धृतिर्व्रीडाऽवहित्थं (तथा ? मूढता) मदः ॥१५८॥

---

१. विविधा—इति क० पु० पाठः ।

हर्षामर्षावसूयेर्ष्या विषादो दैन्यमुग्रता ।
त्रासः शङ्का गदो ग्लानिरुन्मादः सम्भ्रमः श्रमः ॥१५९॥

निर्वेदो जाड्यमालस्यं निद्रा सुप्तं प्रबुद्धता ।
इति भावास्त्रयस्त्रिंशद् विज्ञेया व्यभिचारिणः ॥१६०॥

गददैन्यश्रमालस्यचापलाख्यान्निहान्तरान् ।
अनुभावाविनाभावान् केचिद् बाह्यान् प्रचक्षते ॥१६१॥

एतत् तद् बहुमन्यन्ते तत्र लक्षणवेदिनः ।
विरहादेर्मनस्तापः शरीरातङ्कदो गदः ॥१६२॥

यथा--

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथा तन्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताङ्ग्या यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥१७७॥

यद् वा—

[1]मनोरोगस्तीव्रो विषमिव विसर्पन्नविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥१७८॥

दौ(र्जन्यं ? र्गत्यं ) च भवेद् दैन्यं मनस्तापादिसम्भवम् ।

यथा—

आवर्जितजटामौलिविलम्बिशशिकोटयः ।१७९।

इत्यादि ।

( यद् वा )—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनः ॥१८०॥

इत्यादि ।

मनःशरीरयोः खेदः क्रियातिशयतः श्रमः ॥१६३॥

1. मनोराग० इति स्फुटतरः पाठः ।

यथा—

स्खलयति वचनानि स्रंसयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।
मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥१८१॥

यद् वा—

"प्राप्य मन्मथरसादतिभूमिम् ।"१८२॥

इत्यादि ।

**क्रियाविद्वेष आलस्यं सुखसंविन्मदादिभिः ।**

यथा—

घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होन्तपहिअस्स ।
अवसउणङ्गारअवारविट्ठिदिअहा सुहावेन्ति ॥१८३॥

यद् वा—

चलति कथञ्चित् पृष्टा यच्छति वाचं कथञ्चिदालीनाम् ।१८४।

इत्यादि ।

**अविमृश्य कृतश्चेतोऽनवस्थानं हि चापलम् ॥१६४॥**

यथा—

"कश्चित् कराभ्यामुपगूढनालम् ।"१८५।

इत्यादि ।

( यद् वा— )

अन्यासु तावदतिमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ॥१८६॥

**औत्सुक्या (वेग) पश्चत्वापस्मारान् केचिदूचिरे ।**
**स्नेहेर्ष्यासम्भ्रमोत्कण्ठाश्चतस्रस्ते न मन्वते ॥१६५॥**

अत्र प्रतिकूलस्वभावानां कथं रसता, कथं वा रसोपयोग इत्याह—

**प्रतिकूलस्वभावानां भावानां[1] रसनीयता ।**
**रसनिष्पादकत्वेन स्थाय्यन्तर्वर्तनेन वा ॥१६६॥**

**यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।**
**आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥१६७॥**

**[१]यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।**
**अविभागेन वर्तन्ते तथैवा न मन्वते (?) ॥१६८॥**

अत्रान्यच्चोदाहरणम्—

**रसविद्धं यथा ताम्रं लोहत्वं प्रतिपद्यते ।**
**स्थायिविद्धास्तथा भावा भजन्ते रसनीयताम् ॥१६९॥**

प्रतिकूलस्वभावानामपि रसस्य निष्पादकत्वेन रस्यता । यथा—

"**तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः**" (१८७) इत्यादि ।

अत्राकस्मिकदर्शनादिसमुत्थितावेगसाध्वसादयोऽपि नैसर्गिकीं देव्या रतिं रसस्वरूपेण निष्पादयन्तः स्वयमपि रस्यन्ते ।

स्थाय्यन्तर्वर्तनेन यथा—

"**यान्त्या मुहुर्वलितकन्धरमाननं तद्**"(१८८)इत्यादि ।

अत्र माधवस्य मालतीविषयाया रतेरन्त र्वर्तमाना विषेण दिग्ध इत्यादिवागारम्भानुभाविता व्याध्यादयोऽपि स्वदन्ते ।

( रसा)नु ( सर्वे ? वे)धाद् यथा—

**जीवग्राहं विरमतु तपो (द्रु ? मृ)द्यतामस्थिभा(रे ? रो)**
**भूषारम्भस्तव पुनरसावस्तु कापालिकस्य ।**
**यद्यप्येवं वरद तदपि प्रार्थ(य ? ये ह्)न्त मे स्यात्**
**कण्ठे क(ण्ठे ? ण्ठो) हृदि च हृदयं गण्डयोर्गण्डयुग्मम् ॥१८९॥**

---

1. तथैवात्र हि मन्यते—इति पाठः सङ्गच्छेत ।

१. यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते संख्यां तां तादृशीं विदुः ॥ (वाक्यप० ३, १४, १०२)

अत्र चिरतरतपश्चरणक्लेशादिजनिता निर्वेदग्लानिश्रमादयः पार्वत्या परिभाषण-प्रार्थनपरवागारम्भानुभावसूचितया नैसर्गिकशा[?] विस्तार्यन्ते।

**मनोहरैर्हेतुकार्यसहकारिस्ववाचकैः ।**
**काव्यैः समस्तैर्व्यस्तैर्वा भावावगतिरिष्यते ॥१७०॥**

हेतुना आलम्बनोद्दीपनरूपेण द्विविधेन विभावेन नीलबहलजलदोद्गमेनेव वृष्टेः, कार्येण आङ्गिकवाचिकसात्त्विकाहार्यरूपेण चतुर्विधरूपेणानुभावेन विशिष्टनदीपूरेणेव वर्षस्य, सहचारिणा स्मृत्यादिरूपेण व्यभिचारिवर्गेण गच्छतैकेन चक्रे(ण ? णेव ) चक्रा-( न्तरगमनस्य ) शब्देन ( च ) काव्ये भावानामवगमनम् ।

एतत् कथयन्त्याचार्याः—

"चत्वारो रूपा भावा प·············त्रपारसा" इति ।

रसानामुपादानकारणभूतेन रत्यादिना [1]व्यवतिर्भवतीत्यर्थः (?) ।

अथ रसान् प्रतिपादयति—

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।**
**आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥१७१॥**

**शृङ्गारश्च तथा हास्यो वीरस्तद्वदथाद्भुतः ।**
**रौद्रस्तथा च करुणो बीभत्सश्च भयानकः ॥१७२॥**

**अष्टावेव रसानाहुराचार्या ये पुरातनाः ।**
**केचिच्छान्तमपीच्छन्ति स्थायिन्यस्य [१]धृतिर्मता ॥१७३॥**

**उदा(त्तय ? त्तो)ऽन्थर[2] प्रेयानिति कैश्चित् त्रयः स्मृताः ।**
**अन्तर्भावमपीच्छन्ति तेषामपि रसाष्टके ॥१७४॥**

अथ शृङ्गारनिष्पत्तिप्रकारमाह—

**लोकोत्तरस्वरूपस्य दर्शने श्रवणेऽथवा ।**
**विशिष्टा शिष्टसम्भूता दयितालम्बना रतिः ॥१७५॥**

---

1. व्यक्ति०—इति पाठः सङ्गच्छते ।
2. 'उदात्तो मन्थरः प्रेयान्' इति सङ्गतिः ।
१. मति—इति क० पु० पाठः ।

उद्दीपिता विभावेन चन्द्रमन्दानिलादिना।
स्तम्भादिभिः सात्त्विकैश्च भूयिष्ठमनुभाविता ॥१७६॥

कटाक्षवीक्षाभ्रूक्षेपच्छेकालापैश्च सूचिता।
स्मृत्युत्कण्ठादिभिर्भावैः संयुक्ता (न? त्व)न्तरान्तरा ॥१७७॥

स्थायिनी पटुसंस्कारा शृङ्गारः स्यात् प्रकर्षिणो।

एते निगद्य व्याख्याताः।

स विप्रलम्भसम्भोगरूपः शृङ्गार उच्यते ॥१७८॥

विप्रलम्भसम्भोगावयवद्वयवानित्यर्थः।

तत् कथयति—

यूनोः समागमाभावाद् दैवाद्यैः कामयानयोः।
भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ॥१७९॥

नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते।
रतिरेवेष्टसम्प्राप्तौ पुष्टः सम्भोग इष्यते ॥१८०॥

यथा—

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतो गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहम् ॥१९०॥

कथं विप्रलम्भसम्भोगयोः प्रत्येकं शृङ्गारव्यवहार इत्यत आह—

विप्रलम्भेऽपि सम्भोगप्रत्याशान्तरसन्ततेः।
सम्भोगेऽपि पुनः प्रेमरसातिशयशालिनि ॥१८१॥

विप्रलम्भागमाशङ्कासन्ततेरनुवर्तनात्।
शृङ्गारत्वं द्वयोर्मुख्यतच्छायापचितस्तयोः ॥१८२॥

अत्र यदुक्तम्—"आशाबन्धः कुसुमसदृशप्राणमपि" इत्यादि।
"शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादि।
सम्भोगे विप्रलम्भच्छायापत्तिः स्पष्टा। यथा—

"अदृष्टे दर्शनोत्कण्ठा" (१९१) इत्यादि।

यद् वा—रामः—वत्स ! तत्कालप्रियजनविप्रयोगजन्मा" ( ९२) इत्यादि।

अत्र युक्तिमाह—

**करुणाद् विप्रलम्भस्य पृथक्त्वमत एव हि।**

शोकस्थायिभावात् करुणाद् विप्रलम्भस्य सम्भोगच्छायापत्तितः। अन्यथा स्तम्भवैवर्ण्याश्रुनिर्वेदव्याधिचिन्ताविलापादिसाम्यात् तयोः स्वरूपं दुर्विज्ञानं स्यादिति। मतान्तरमुपन्यस्याक्षिपति—

**शृङ्गाराभ्यां द्वयोर्विप्रलम्भसम्भोगयोर्भवेत् ॥१८३॥**

**एकस्मिन्नपि या सा तु ग्रामान्ते ग्रामशब्दवत्।**

**इति प्रचक्षते केचिद् वयमेत (त् ते ? न्न) मन्महे ॥१८४॥**

मुख्यसम्भवे गौणपरिग्रहो लघीयानित्यर्थः।

**शृङ्गारो द्विविधो विप्रलम्भसम्भोगे स्यादनादरः (?)[1]।**

**अतीव स्पृहणीयोऽयमतो नित्यसुखादपि ॥१८५॥**

अत्रैवास्य उक्तम्—

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नालापा निपतन्ति बाष्पकलुषा नोपैति कार्श्यं वपुः।
स्वाधीनामनुकूलिनीं स्वगृहिणीमालिङ्ग्य यत् सुप्यते
किं तत् प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥१९३॥

इति।

---

1. शृङ्गारो द्विविधो विप्रलम्भसम्भोगभेदतः।
विप्रलम्भस्तु तत्र स्यात् सम्भोगे स्यादनादरः॥

तस्मात्—

पादन्यासं कृतवति बहिः श्रोत्रयोरस्मि लीना
याते दृष्टिप्रसरमधुना दृष्टिरेवाहमासम् ।
शय्योपान्तस्पृशि सपुलकस्वेदकम्पालसाङ्गी
साहं जाता तदनु सखि मे विप्रलब्धः प्रबोधः ॥१९४॥

इत्यादिष्वपि विप्रलम्भच्छाया निर्वोढव्या ।

**पूर्वानुरागो मानश्च प्रवासः करुणः स्मृतः ।**
**पुरुषस्त्रीप्रकाण्डेषु विप्रलम्भश्चतुर्विधः ॥१८६॥**
**प्रागसङ्गतयोर्यूनोरभिलाषः प्रगल्भते ।**
**सङ्कल्परमणीयोऽनुरागः स प्राच्य उच्यते ॥१८७॥**

यथा—

अविअण्णपेच्छणिज्जेण तक्खणं मामि तेण दिट्ठेण ।
सिविणअपीएण व पाणिएण तण्हं चिअ ण फिट्ठा ॥१९५॥

**अहेरिव गतिः प्रेम्णः स्वभावकुटिलेति यत् ।**
**अहेतोर्मेति नेत्युक्त्या हेतोर्वा मान उच्यते ॥१८८॥**

अहेतोर्मानो यथा—

अद्धक्खरूसणक्खणपसज्जणअलिअवअणणिब्बद्धो ।
उम्मत्तअस्स तावो पुत्तअ पअवी सिणेहस्स ॥१९६॥

हेतोर्मानो यथा—

परिपुच्छआ ण जम्पइ गहिआ विपुरइ चुम्बिआ रुअइ ।
तोह्लिक्को णववहुआ कआवरोहेण नाहेण ॥१९७॥

**मानोऽपि प्रणयेर्ष्याभ्यां द्विधाद्यः स्याद् द्वयोरपि ।**

तत्र स्त्रियाः प्रणयमानो यथा—

द्यूते छद्मपरः कामं कान्तया कोपनिघ्नया ।
सासूयमीक्षितस्त्र्यक्षः स्मयमानः पुनातु वः ॥१९८॥

प्रणयमानः पुंसो यथा—

अस्मिन् देव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद् गोदवरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥१९९॥

ईर्ष्यामानः पुनः स्त्रोणामेव वाच्यः प्रबन्धृभिः ॥१८९॥

अर्थ शंनम् ।

यथा—

न केतकीनां विकसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।
[1]तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विजृम्भते ॥२००॥

यद् वा—

गिह्मदवग्गिमसीमइलिआइ दिस्सन्ति विञ्झसिहराइ ।
आससु पउट्ठ गु ? । वइएण होन्ति णवपाउसब्भाइ ॥२०१॥

भ्रान्तिर्विपर्ययज्ञानं सादृश्योदयहेतुकम् ।

यथा—

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥२०२॥

यद् वा—

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिस इति करी सङ्कलयति ।
रतान्ते तल्पस्थान् हरति दयिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥२०३॥

यद् वा—

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥२०४॥

---

१. तटिल्ल—इति क० पु० ख० पु० ग० पु० पाठः ।

यद् वा—

म्लातं तालफलाशया स्तनयुगं बिम्बभ्रमाच्चाधरो
दष्टः पाकविदीर्णदा[1]डिमधिया लीढाः स्फुरन्तो रदाः ।
इत्थं त्वद्रिपुयोषितो वनतरुच्छायासु मार्गश्रमा-
च्छिद्राणा मुहुरादृता मुहुरधिक्षिप्ताश्च शाखामृगैः ॥२०५॥

**द्वयोर्यत्रोक्तिचातुर्यादौपम्यार्थोऽवगम्यते ॥१९०॥**

**साम्यमित्यामनन्त्येतं साहित्यरसवेदिनः ।**

यथा—

न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान् ।
म्लानापि न म्लायति केसरस्रग् देवी न खण्डप्रणया कथञ्चित् ॥ ०६॥

इत्यादि ।

**अर्थयोरतिसादृश्याद् यत्र डोलायते[2] मनः ॥१९१॥**

**तमेकानेकविषयं कवयः संशयं विदुः ।**

यथा—

"किं पद्ममन्तर्भ्रान्तालि" (२०७) इत्यादि ।

यद् वा—

सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ॥ ०८॥

**नानालङ्कारसंसृष्टिः सङ्करः कथ्यते बुधैः ॥१९२॥**

यथा—

"अङ्गुलीभिरिव केशसञ्चयम्" ।२०९।

इत्यादि ।

अत्रोपमारूपकादिसङ्करः स्पष्टः ।

**शाब्दोऽपि सम्भवत्येष प्राधान्यादत्र दर्शितः ।**

शाब्दः शब्दालङ्कार इत्यर्थः ।

**एते सर्वेऽपि सादृश्यस्पर्शिनो दधते भिदाम् ॥१९३॥**

---

१. 'दा डम०' इति शुक्त पाठतुम् ।
2. 'दोलायते' इति—समीचीनम् ।

उपमाया उक्तिभेदादिति सूक्ष्मार्थदर्शिनः।
साम्यप्रपञ्चोऽयमिति प्राज्ञैः कैश्चिन्न कथ्यते ॥१९४॥

ननु सर्वेऽप्यलङ्काराः सादृश्यस्पर्शिन इत्युक्तम्, विभावनायां कथं सादृश्यमवगम्यते ? उच्यते—

"अपीतक्षीबकादम्बम्" इत्यत्र मदिरापानजनित इव शरदिजो मदः कलहंसानामिति हि विवक्षितम्। यथा—

निर्मग्नेन मयाम्भसि स्मरभरादाली समालिङ्गिता
　　केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि।
इत्युत्स्वप्नपरम्परासु सुदृशा श्रुत्वा वचः शार्ङ्गिणः
　　सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥२१०॥

यद् वा—

पोत्री भिनत्तु (खु ? दु) रितं मम पयः (?) सदंष्ट्रा-
मुच्चैर्नयन्　　भुवमुरःस्थलसंश्रितायाः।
ईर्ष्याकषायनयनस्फुरिताधरोष्ठं
प्रस्विन्नमत्तभववदाननमम्बुजायाः　(?) ॥२११॥

देशान्तरादिभिर्यूनोर्व्यवधानं चिराय यत्।
नवेऽनुरागे प्रौढे वा प्रवासः सोऽभिधीयते ॥१९५॥

यथा—

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
　　र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि।
उद्ग्रीवं चरणार्धरुद्धवसुधं कृत्वाश्रुपूर्णां दृशं
　　तामाशां पथिकस्तथापि किमपि ध्यायन् मुहुर्वीक्षते ॥२१२॥

यद् वा—

उच्चा　सणो　मकिर······अंकेण　अज्ज।
समं　प्पइविरहोएं　तेपविएअणंतेपि　(?) ॥२१३॥

लोकान्तरगते यूनि वल्लभे वल्लभो यदा।
भृशं दुःखायते दीनः करुणः स तदोच्यते ॥१९६॥

यथा—

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साऽधिशेते कथं देवी हुताशनवतीं चिताम् ॥२१४॥

अत्र किञ्चिद् विशेषमाह—

**एषु पूर्वानुरागस्य प्रपञ्चेनोपवर्णनम् ।**
**कार्यं काव्यस्य शृङ्गारो रसोऽङ्गीक्रियते यदि ॥१९७॥**

एषु विप्रलम्भेषु पूर्वानुरागः प्रपञ्चेन वर्णनीयः । तत एव हि प्रपञ्चे शृङ्गारो हृष्टो भवेत् । तत्र मानाद्यकथनमपि स (श्य ? ह्य ) मिति यावत् ।

उक्तं हि—

अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानरागयोः ॥

**पूर्वानुरागे मानादित्रयमप्युच्यते बुधैः ।**
**[1]ए······प्रायेण मानस्य कविचूडामणेर्मतिः ॥१९८॥**

कादम्बर्यां पूर्वानुरागे प्रणयमानो यथा— 'आवेदयामि ते, दत्तावधाना शृणु । स्वप्नेषु प्रतिदिनमागतागतस्य रहस्यसन्देशेषु निपुणं धूर्तः पञ्जरशुकशारिकायां सुप्तायां श्रवणदन्तपत्रेषु व्यर्थमनोरथो मोहितमानसः सङ्केतस्थानानि लिखति' इत्याद्युपालम्भसहितः प्रघट्टकः ।

प्रवासो यथा—"देव ! श्रूयताम्, निर्गते त्वयि हृदयसहस्रप्रयाणपटहकलकलमिव नूपुरचक्रक्वणितेन कन्यान्तःपुरं कुर्वती कादम्बरी सपरिजना सौधशिखरमारुह्य तुरगखुरलेखाधूलिधूसरं देवस्यैव गमनमार्गमालोकितवती ।"

करुणो यथा महाश्वेतावृत्तान्ते—"नाथ ! जीवितनिबन्धन ! क्व मामेकाकिनीमशरणां विमुच्य गच्छसि ··· ।"

असङ्गतयोरेव पूर्वानुरागः । मानादित्रयं तु प्राक् सङ्गतासङ्गतयोरुभयोरपीति निर्णयः ।

भवभूतिना मालतीमाधवे सङ्गतयोर्मान ··· । अत्रोक्तस्य करुणस्य करुणशृङ्गारस्य च को भेद इत्यत्राह—

**हेतोः फलस्य रूपस्य विषयस्य च भेदतः ।**
**करुणात् करुणस्यास्य केचिद् भेदं प्रचक्षते ॥१९९॥**

---

1 एषा—इति सङ्गच्छते ।

( स ) हेतुः पुनः सकलः सप्रत्याशस्वरूपः स्त्रीपुंसविषयः करुणशृङ्गारः, एतद्विपरीतः करुण इति स्पष्टो भेदः ।

एतैर्हेतुफलस्वरूपविषयैर्भेद उक्तः । तान् क्रमेण क्षिपति—

**दुःखात्मकस्य निर्वेदग्लानिमोहादिशालिनः ।**
**अश्रुवैवर्ण्यगाद्गद्यप्रलयाद्यनुभावनः ॥२००॥**
**हे (ति ? तुः) शोको रतिर्वास्तु संश्लेच्छातोऽभिधीयताम् ।**

उभयमपि प्रतिकूलस्वभावम्, उभयोरपि सदृशा व्यभिचारिणो निर्वेदादयः, अश्रुपातादयश्च सात्त्विकाः, द्वयोरप्युच्चरन्ति विलापाक्षराणि ।

करुणशृङ्गारे निर्वेदो यथा—

प्रविवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु ॥२१५॥

करुणे यथा—

कियद्भिरपि सोऽध्वानमुल्लङ्घ्यापि शनैः शनैः ।
निःशब्दसैन्यसङ्घातसहितः प्राविशत् पुरीम् ॥२१६॥

इति पितुरत्यये ।

करुणशृङ्गारे अश्रु यथा—

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत् कथं नु ते ।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥२१७॥

करुणे अश्रु यथा—

अन्योन्यकण्ठाश्लेषेण पीडितस्येव निर्ययुः ।
बाष्पाम्भसस्तयोः पूराश्चिरं तत्रापि मांसलाः ॥२१८॥

इदमपि पूर्ववत् ।

करुणशृङ्गारे विलापो यथा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम् ॥२१९॥

करुणे प्रलापो यथा—

जनकस्तादृशोऽस्माभिः कुत्र ............ ।
कथं नु सङ्घटि (व्लेते ? व्यन्ते ) तादृशाः परमाणवः ॥२२०॥

इत्थमेकान्ततुल्यरूपयोर्हेतुभेदाद् भेदोऽस्तीति शस्तः शपथ एव भेदाक्षेपः।

**फलमस्तीति चेदत्र पुनस्संगमलक्षणम् ॥२०१॥**

**कुतो भाविपरिज्ञानमस्मिन् दुःखमहार्णवे।**

**ज्ञातं चेद् येन केनापि प्रवासात् कियती (भिदा) ॥२०२॥**

(दुःखमग्नस्य) पुंसः सुखेन (स्वसुखेन?) भाविना किं तदानीं फलम्? आश्वासमात्रं चेत्, कुत एवं ज्ञातम्? भाविफलं यथाकथञ्चिद् ज्ञातं चेत्, प्रवासकरुण-शृङ्गारयोः को भेदः? प्रवासेऽपि निर्वेदादयः सदृशाः।

यथा—

व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः सखीनां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥२२१॥

अश्रु यथा—

अपाङ्गनिष्यन्दभराश्रुपूरैरार्द्रोपधानास्तरणांशुकासु।
विवेष्टते सा विरहे मृगाक्षी शय्यासु शीर्णस्तनचन्दनासु ॥२२२॥

प्रलापो यथा—

हारोऽपि नार्पितः कण्ठे स्पर्शसंरोधभीरुणा।
आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ॥२२३॥

तस्मात् करुणव्यावर्तकप्रत्याशानन्यहेतुर्भाविफलपरिज्ञानं न प्रभाव? वास?-स्यैव स्वरूपभेदाक्षेपः।

**सङ्गत्याशास्वरूपत्वमनेनैव निरस्यते।**

अनेनैव भाविफलज्ञानेन न विषयभेदाक्षेपः।

**रूपाभेदेऽपि विषयभेदोद्भेदोऽपि कौतुकम् ॥२०३॥**

अस्य विषयभेदोद्भेदोऽपि कौतुकम्। अस्य विषयभेदात् करुणभेदः करुणावा-न्तरभेद एवेत्यर्थः। बहवोऽपि करुणभेदा वैषयिकाः प्रथन्ते।

**इत्याहुर्विप्रलम्भस्य त्रैविध्यमपरे बुधाः।**

अत्रोच्यते—

किन्तु प्रबन्धे कविभिर्भविष्यद्वस्तुसूचनात् ॥२०४॥
आशायास्त्रुटनाभावाद् रतिस्तत्रानुवर्तते ।

लोके यद्वा तद्वास्तु, करुणशृङ्गारिणि प्रबन्धे येन केनापि मार्गेण पुनःसङ्गमलक्षणं फलं सूच्यते । तत्राशातन्तुसन्तानवृता रतिरनुवर्तते । ततो हेतुफलस्वरूपविषयभेदसिद्धिः । यथा कुमारसम्भवे—

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥२२४॥

कुसुमायुधपत्नि दुर्लभस्तव भर्ता नचिराद् भविष्यति ।
[1]शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि ॥२२५॥

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ॥२२६॥

उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति ।
तदिदं परिरक्ष शोभने भवितव्यप्रियसङ्गमं वपुः ॥२२७॥

इत्यादि ।

रघुवंशे अजः परेतामिन्दुमतीं मुनिसन्देशतः सुरसुन्दरीं समाकर्ण्य देवभूयं गतेन मया सा सङ्गन्तुं शक्यत इत्यबुध्यत । एतत् परस्तात् प्रकटितम्—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
　　देहन्यासादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकचतुरया सङ्गतः कान्तयासौ
　　लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥२२८॥

कादम्बर्यां महाश्वेतावृत्तान्ते पुण्डरीकव्यपाये—'वत्से ! महाश्वेते ! न परित्याज्यास्त्वया प्राणाः । पुनरपि तवानेन सह भविष्यति सङ्गमः । इत्येवमादृतः पितेवाभिधाय सहसा गगनतलमुदपतद्" इत्यादि ।

एवं सप्रत्याशस्वरूपत्वेऽपि करुणशृङ्गारस्य प्रवासाद् भेदमाह—

[2]..........तत्तावकशरीरोऽप्यनुवर्तनात् (?) ॥२०५॥
करुणस्य पृथग्भावः प्रवासादवधार्यताम् ।

इति ।

---

1. शृणु येन—इति पाठः समुचितः ।
2. प्राणात्ययेऽपि तद्रागाच्छरीरस्यानुवर्तनात् ।—इति सन्दर्भोचितः पाठः ।

प्रियजनशरीरसन्निधावपि [१]स्थातुं योग्यो न चेन् प्रवास इत्यर्थः (?)[1] ।

यथा—

प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥
विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ॥२२९॥

एवं कादम्बर्यामपि द्रष्टव्यम् ।

तर्हि मनाक् कथितो भेद इति चेन्, श्रूयतामिदम्—

**शोकोपहितवेषोऽयं कोपोपहित एव सः ॥२०६॥**

मानेऽपि निर्वेदा( श्रु )दयो भाविफलपरिज्ञानं प्रियजनसन्निधानेऽपि स्थितिर्विद्यते ।

माने निर्वेदो यथा—

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥२३०॥

अश्रु यथा—

णिभुअं खुणं ससिजडखंबइ.....................रस्सुतं पिणि ।
सद्दंबक आपराहाहि अअच्चिअणिह्लविज्जत्ति (?) ॥२३१॥

प्रलापो यथा—

क्रोधो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥२३२॥

भाविपरिज्ञानं यथा—

पणमाणहमाणसहला चलणे किं देवणेहि अण्णेहि ।
जंस पसाएण पिओ लोललवा[२] अत्तपासेसु ॥२३३॥

---

1. उद्धृतः पाठः स्पष्टः ।
प्राणात्ययात् शरीरसन्निधावपि स्थातुमनर्हता ।

१. स्थातुं—इति ग० पु० पाठः ।

२. लद्धा—इति क० पु० पाठः ।

प्रियसन्निधाने स्थानं यथा—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुर्लग्नः कण्ठे तर(ल)यति बाष्पः स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥२३४॥

एतादृशो मानादेतादृशक ुणस्य को भेदः? उच्यते, करुणः शोकोपहित इति स्पष्टम् ।

मानः कोपोपहिते यथा—

स्त्रीणां तथा पल्लवकोमलेषु पादेषु शोकाहतिपल्लवेषु ।
कर्णोत्पलैरेव बभूव दण्डः प्रियापराधे कतिचिद् दिनानि ॥२३५॥

यद् वा—

मृद्वीषु पादाहतिषु प्रकाममनिर्वृतानां दयितापराधे ।
मृगीदृशां शाम्यति यत्र मन्युः कठोरलीलाकमलप्रहारैः ॥२३६॥

प्रबन्धे भविष्यद्वस्तुसू( च )नमित्युक्तम्, अन्यत्रापि दृश्यत[1] इत्यत्राह—

**लोकेऽपि सर्पदष्टादिविषये त्विदमस्ति चेत् ।**
**अस्तु तच्छिद्यते किं नः काव्येषु स्वदतेतराम् ॥२०७॥**

इति ।

प्रीतिहेतौ प्रेयस्येवं प्रदर्शयितुं शक्यमिति[2] केचित् [1]प्रबन्धृभिरेव तत्रात्यन्तनिर्व्यूढम् ।

**एतेषामन्तरत्वेन सम्भोगोऽपि चतुर्विधः ।**

तेषु पूर्वानुरागो यथा—

पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत् कामदोहदसुखं मनोहरम् ॥२३७॥

---

1. 'प्रबन्धृभिः' इति साधुः ।
१. क० पु० नास्ति ।
२. क० पु० नास्ति ।

मानानन्तरे यथा—

पौलस्त्य - पीन - भुज - सम्पदुदस्यमान-
कैलाससम्भ्रमविलोलदृशः प्रियायाः ।
श्रेयांसि वो दिशतु निह्नुतकोपचिह्न-
मालिङ्गितोत्पुलकमासितमिन्दु - मौलेः ॥२३८॥

यद् वा—

न स्पृष्टोऽपि[1] त्रिदशसरि(तां ? ता) नूनमीर्ष्यानुबन्धा-
न्नाप्युन्मृष्टो भुजगपतिना तर्जनाभिर्जयायाः ।
मानस्यान्ते नयनसलिलैः क्षालितः शैलपुत्र्याः
पत्युर्मौलौ नतिजुषि जयत्यात्मनः पादपांसुः ॥२३९॥

प्रवासानन्तरे यथा—

आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घतां
गेहिन्या परितोषबाष्पतरलामासाद्य दृष्टिं मुखे ।
दत्त्वा पीलुशमीकरीरकवलान् स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः ॥२४०॥

करुणानन्तरे यथा—

भवति विततश्वासोद्दाहप्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।
वदनमधिकं मूर्छाच्छेदा( त् ) प्रसादि विराजते
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥२४१॥

**तत्तत्स्थाय्यादिसंयोगात् तत्तद्रससमुद्भवः ॥२०८॥**
**अनयैव दिशा लक्ष्यो वि(स्तृ ? स्त)तो लक्षणान्तरैः ।**

अन्येषामपि हास्यवीराद्भुतरौद्रकरुणबीभत्सभयानकानां यथाक्रमं हासोत्साह-विस्मयक्रोधशोकजुगुप्साभयानि स्थायिभावाः, विभावानुभा( वाः ? व )व्यभिचारि-संयुक्तैस्तैर्यथास्वं रसनिष्पत्तिः ।

तत्र हास्यो यथा—

इदमम्लानमानाया लग्नं स्तनतटे तव ।
छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥२४२॥

---

१. त्रिसार—इति ग० पु० पाठः ।

वीरो यथा—

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥२४३॥

यद् वा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥२४४॥

अद्भुतो यथा—

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।
फलं मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥२४५॥

यद् वा—

कृष्णेनाद्य गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विदारितेऽथ वदने दृष्ट्वा समस्तं जगन्-
माता यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥२४६॥

रौद्रो यथा—

निगृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः ।
सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥२४७॥

यद् वा—

कृष्टा येन विलोलकेशनिवहा पञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञः कुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥२४८॥

करुणो यथा—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम गतोऽसीति सन्तापादनुमीयसे[1] ॥२४९॥

---

1 'अनुमीयते' इति शुद्धः पाठः । 'सन्तापेनानुमीयते' इत्यपि पाठ उद्धटसागरस्य प्रथमे प्रवाहे द्रष्टव्यः ।

यद् वा—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः[1] ॥२५०॥

बीभत्सो यथा—

पायं पायं तवारीणां शोणितं पाणिसम्पुटैः ।
कौणपाः सह नृत्यन्ति कबन्धैरान्त्रभूषणैः ॥२५१॥

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण[2] ॥ ५ ॥

भयानको यथा—

"मूले मूले हि पश्यामि" ।२५३।

इत्यादि ।

यद् वा—

इदं मघोनः कुलिशं धारासन्निहितानलम् ।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥२५४॥

लोकयात्रानुसारिणां केषाञ्चिदाचार्याणां मतमुपन्यस्यति—

**शृङ्गाराद्यान् रसानन्ये चतुरश्चतुरा विदुः ॥२०९॥**
**अनुकूलस्वभावत्वादुपादेयान् निसर्गतः ।**

कथं तत्र काव्येष्वन्यत्रापि रसप्रतीतिरित्याशङ्क्याह—

**रौद्राद्या रसतां यान्ति पूर्वेषां रुचिदायिनः ॥२१०॥**
**माध्वीकस्य यथा क्षारः क्षीरस्य लवणो यथा ।**

शृङ्गारमध्ये रौद्रो मालतीमाधवे यथा—"माधवः (सस्पृहम्)—

जितमिह भुवने त्वया वयस्याः सखि बकुलावलि वल्लभासि जाता ।
परिणतशरदण्डकाण्डपाण्डुस्तनपरिणाह[3] - विलास - वैजयन्ती ॥२५५॥

१. वाल्मीकीयरामायणे यु० का० स० १०१, श्लो० १५ ।

२. उ० रा०, अ० ३, श्लो० २६ । बीभत्से प्रक्षिप्तमिदमुदाहरणम् ।

३. हा—इति क० पु० पाठः ।

इत्य(त्रोप ? त्र प्र)करणे 'कलकल' इत्यारभ्य 'दुट्ठसद्दूलो कअन्तलीलाइदं करोदी'ति यावत् ।

वीरमध्ये करुणो वेणीसंहारे यथा— युधिष्ठि :—भवतु, मुने ! किमतः परं श्रुतेन ? हा तात ! भीमसेन ! जतुगृहविपत्समुद्रतरणयानपात्र ! हा किर्मीरहिडिम्बबकासुरजरासन्धविजयमल्ल ! हा" इत्याद्युपलक्षितं प्रकरणम् ।

हास्ये बीभत्सो भगवदज्जुके यथा—

शिरसि सुविरे[1] सुप्तच्छिद्रे कपालचतुष्टयं
　　ह्युरसि विपुलौ मांसाधारावधश्च गतिद्वयम् ।
अशुचिविरहप्रायस्त्वं हि त्वया परिवेष्टितं
　　तदपि मलिनं योषित्कायं स्पृशन्त्यजितेन्द्रियाः (?) ॥२५६॥

अद्भुतमध्ये भयानकोऽनर्घराघवे यथा—"नेपथ्ये—

यद्यत् कृत्तं दशमुखशिरस्तन्मुखस्यैव कान्तौ
　　सङ्क्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः ।
यो यः कृत्तो दशमुखभुजस्तस्य तस्यैव वीर्यं
　　लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ॥२५७॥

अत्र प्रकरणेषु 'पुनर्नेपथ्ये कलकल' इत्यादि यावत् 'पुनर्नेपथ्य' इत्यादि । एवं तन्नियमो यथाप्रयोगं द्रष्टव्यः । श्रृङ्गारादिचतुष्टयमेव मुख्यो रसः, अन्यस्य चतुष्टयस्य तत्संसर्गादौपाधिकं रसत्वमिति निर्णयः ।

अत्र युक्तिः—

**प्रबन्धेष्वत एवै (षां ? षां) नाङ्गिता बहु मन्यते ॥२११॥**

अत्र मानान्तरम्—

**"लोके[2]"' केचिद् रौद्रस्योपादेयत्वं प्रशासति ।**
**चित्तोल्लासादिदानस्य हसिताद्यनुभाविनः ॥२१२॥**

इति ।

कोपस्योपादेयत्वं साधयति—

**कोपमाहारयन्त्येव वीरा रिपुवधैषिणः ।**

यथा—'कोपमाहारयत् तीव्रम्' (२५८) इति ।

**अङ्गिता (अ ? म)पि मन्यन्ते ततस्तस्य डिमादिषु ॥२१३॥**

1. 'शुषिरे' इति पाठ उचितः ।
2. लोकेऽपि—इति सङ्गतः पाठः ।

तथा हि—

रसैरहास्यशृङ्गारैः षड्भिर्दीप्तैः समन्वितः ।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥२१४॥
चन्द्रसूर्योपरागैश्च (नाऽन्योश्च ?)न्याय्ये रौद्रे रसेऽङ्गि(ते ? नि) ।
चतुर(ङ्गं च ? ङ्कश्च)तुःसन्धिर्निवि(शेषो ? मर्शो) डिमः स्मृतः ॥२१५॥

इति ।

एनमाक्षिपति—

तत्स्थानेष्वपि वीरस्य निर्वाह्यत्वमीप्सितम् ।

इति ।

त्रिपु(र)दाहादिषु युद्धवीर एव निर्वाह्य इत्यभिप्रायः । रौद्राङ्गित्वव्यपदेशो बाहुल्याभिप्रायेणोक्तः । रौद्ररसेऽङ्गिनि डिमे शृङ्गारहास्यवर्जनमेव [1]निबद्धमाचार्यैः—(नरेण ग्रागित्वं ?) ।

शृङ्गारहास्यवर्जितशेषैः सर्वैं रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिश्चतुरङ्को वै डिमः कार्यः ॥ इति ।
रौद्रभयानकबीभत्सवीरकरुणाद्भुतसमेतः । इति ।

चतुरङ्करचनया डिमः षोडशनायको दीप्तरसः पिशाचासुररक्षोनागबहुल-(च्छेद्यो ? श्चेत्ये) तावदुक्तम् । कैशिकीवृत्तिविच्युतश्चासौ कर्तव्य इति च ।

वीररसश्चेन्निर्वाह्यः, कथं रौद्रेऽङ्गित्वभद्र[2] (?) इत्याह—

[3]युद्धवीरोऽपि नाकोपविकृतिः क निरुह्यते ॥२१६॥

रौद्रबाहुल्याद् वीरेऽपि रौद्रभ्रम इत्यभिप्रायः ।

अङ्गमन्याय्यो रौद्रः, अङ्गी तु न्याय इति चेत्, उच्यते—

न्यायः कोपोऽत्र नात्रेति नैतयोर्महदन्तरम् ।
प्रथते बहुधा कोपो धीरोदात्तोद्धतादिषु ॥२१७॥

---

1. निबद्धमाचार्यैः, न रौद्राङ्गत्वम्—इति सन्दर्भोचितः पाठः ।
2. भद्र—इति शुद्धः पाठः ।
3. युद्धवीरेऽपि—इति समुचितः पाठः ।

अन्यायत्वमन्याय्यत्वं च नाङ्गित्वप्रयुक्तम्, अपि स्वाश्रयगुणप्रयुक्तमित्यर्थः ।

करुणस्य च लोकेऽपि रसत्वं केचिदूचिरे ।
शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ॥२१८॥

सम्प्रीतिविषयोऽभीष्टं तद्विना तदनुस्मृतेः ।
नोपपद्येत सास्वादरूपा विपश्चितेते ॥२१९॥

तद्वैधात् करुणस्यापि स्वाद्यत्वं महदन्तरम् ।
तथाहि विषयाश्लिष्टान् प्रलपन् प्रेयसो गुणान् ॥२२०॥

जनः प्रभूतकरुणो न किञ्चिद् वेत्ति मुग्धधीः ।
तस्मादङ्गित्वम(ङ्गे ? ङ्के)षु स्वीकृतं विदुरैरिति ॥२२१॥
अनुभूतिविरुद्धार्थो वाङ्मात्रेण प्रसाधितः ।

अ(ङ्गे ? ङ्के) करुणस्याङ्गित्वमिति यदुक्तम्, तदपि नेत्याह –

वीरशृङ्गारयोरन्यो रसो(ऽङ्)केषु निरुह्यते ॥२२२॥
नायकस्य प्रवृत्तिः स्यादन्यथा निष्फला यतः ।

तदुक्तमाचार्यैः—कारुण्यरससम्पूर्णोऽङ्क इति । रसस्तु करुणः स्थायी (?)[1] तत्सर्वं प्रायिकविवक्षयोक्तम् । तथा ह्याह भोजराजः—

करुणरसप्रायकृतो नियुद्धयुद्धोद्धतप्रहारश्च । इति ।

इति लौकिकसिद्धान्तः शाब्दिकैर्नायमादृतः ॥२२३॥
लोके हेतुस्वभावानां शब्दावस्थापितात्मनाम् ।
उपादेयत्वमापन्नं स्वीकृतं काव्यवेदिभिः ॥२२४॥
[2]"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिह[3]" ज्ञानं सर्वं शब्देन भासते ॥२२५॥
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥२२६॥

---

1. अत्र पूर्णविराम एवोचितः ।
2. इत आरभ्य प्रत्यवमर्शिनी इत्यन्तं यावद् वाक्यपदीयकारिके ।
3. मिव—इति समीचीनः पाठः ।
अधुनोपलभ्यमानेषु ग्रन्थेषु सर्वत्र 'इव' इत्येष एव पाठः समुपलभ्यते ।

इति सर्वत्र विज्ञाने शब्दानुगमनं भवेत् ।
तथाप्यशब्दं शाब्दं च द्विविधं तत् प्रकाशते ॥२२७॥
अन्यथैवाग्निसंयोगाद् दाहं दग्धोऽपि मन्यते ।
अन्यथा दाहशब्देन दाहार्थः सम्प्रकाशते ॥२२८॥
भारत्याः सृष्टिवैचित्री वेधसोऽपि न विद्यते ।
[1]व्रीलाबीभत्सजनकं दम्पत्योरिह चेष्टितम् ॥२२९॥
शब्दोपहितरूपं तच्छ्रोतृभ्यः स्वदतेतराम् ।

यथा--

विलष्टचन्द्रमदयैः कचग्रहैरुत्पथार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभूदतृप्तये ॥२५९॥
उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥२६०॥

सन्निवेशविशेषाच्च दुरुक्तमपि शोभते ॥२३०॥
नीलं पलाशमाबद्धमन्तराले स्रजामिव ।

यथा--

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥१६१॥

शब्दोपनीतैराकारैर्बुद्धेर्विषयतां गताः ॥२३१॥
प्रत्यक्षा इव मध्याह्ने स्वदन्ते चन्द्रिकादयः ।

यथा--

सद्योद्रावितकेतकीदरदलस्रोतःश्रियं बिभ्रती
या (ता ? सा ) मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत् ।
उत्सेच्या कलशीभिर(ञ्ज ? ञ्जलि )पुटैः पे(या) मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा वर्तते (चन्द्रिका) ॥२६२॥

---

1. 'व्रीडा' इति साधुः ।

विरसाः सरसा भावाः सरसा विरसा इव ॥२३२॥

क्रियन्ते शब्दसन्दर्भैरकालेनैव विकुर्वता (?)।

विरसाः सरसा यथा—

शून्यग्रामटिकोपकण्ठरचितक्षुद्रैककूपीपयः-
पर्यायक्रमसेकशाकहरितः कच्छोऽयमालोक्यताम्।
अस्मिन् हन्त हरन्ति हालिकशिशुक्रीडोपमर्दस्फुटत्-
पक्वोर्वा(रु? रुक)काण्डखण्डितजरद्गोमायवो वायवः ॥२६३॥

यद् वा—

हरति हलकयोषित्तन्तुनिर्माणलीला
वलित-वलयवेल्लद्-दोर्लतावत्तदृष्टिः।
नि(य)मितवसनान्तःस्पष्टदृष्टोरुमूल-
प्रगुणविहितचक्षुःपारणात् पान्थयात्राम् ॥२६४॥

सरसा विरसा यथा—

का नाम रम्यता वक्त्रे सच्छिद्रविवरोपमे।
दर्शनस्य सुपूर्णत्वात् तस्य त्रासो न जायते ॥२६५॥

हा(स्व ? स)स्मितं मुखं वेत्सि कामिन्याः किं न पश्यसि।
मांसपे(शी ? शीं) गलच्छिद्रे प्रकटामस्थिमालिकाम् ॥२६६॥

लोचने भ्रूलतालास्यवलिते ललिते मुहुः।
चले समेदःपटले सलिले का कटाक्षधीः ॥२६७॥

विशिष्टेनैव शब्देन विशिष्टोऽर्थः प्रतीयते ॥२३३॥

पश्यति स्त्रीति वाक्येऽस्मिन् न रसः प्रतिभासते।
विलोकयति कान्तेति व्यक्तमेव प्रतीयते ॥२३४॥

लालेत्युद्विजते लोको वक्त्रासव इति स्पृहा।
निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ॥२३५॥

अतिसुन्दरमन्यच्च ग्राम्यकक्ष्यां विगाहते।
तच्च शब्दस्य माहात्म्यमर(सोऽसे)ऽपि मनो यतः ॥२३६॥

श(ब्दा?ब्देना)वस्थितात्मायं करुणोऽपि रसीकृतः।

---

1. कुर्वता—इत्येव साम्प्रतम्।

करुणोऽपीति रौद्रादीनामप्युपलक्षणम् । तत्र युक्तिः—

नो चेत् कथं प्रवृत्तिः स्याच्छक्तिवेधादिदर्शने ।
महाजनस्य रोमाञ्चबाष्पादेः कथमुद्भवः ॥२३७॥
कथं वा तत्प्रयोक्तॄणां पूर्णपात्रोपपादनम् ।
अवचा किल काव्यस्य रसं प्रति विभावना ॥२३८॥
विभानाकारणत्वमेतदेव ''' '''वक्तिः (?) ।
स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः ॥२३९॥
विकासविस्तरक्षोभविक्षेपैर्मनसः पुनः ।
अष्टधा प्रथते स्वादस्तत्तत्काव्यार्थकल्पितैः ॥२४०॥

विकासाच्छृङ्गारहास्यौ, विस्तराद् वीराद्भुतौ, क्षोभाद् बीभत्सभयानकौ, विक्षेपाद् रौद्रकरुणाविदष्टौ ।

अत्र मतान्तरम्—

जायेत हा (स्याच्छृङ्गारो ? स्यः श्रृङ्गाराद्) वीराज्जायेत चाद्भुतः ।
रौद्राज्जायेत करुणो बीभत्साच्च भयानकः ॥२४१॥

इति रसेभ्यो रसनिष्पत्ति क्वचन कथयन्ति ।

शृङ्गा(रहास्याद् र ? राद् हास्यर)सोत्पत्तिर्यथा—

स एष भुवनत्रयप्रथितसङ्गमः शङ्करो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परितोडयन् जयति जातहा(सः) स्मरः ॥२६८॥

वीराद‌द्भुतनिर्ष्पत्तिर्यथा—

सम्प्रत्येव हि गोग्रहे यदभवत् तत् तावदाकर्ण्यता-
मेतत् ते हृदयं स्पृशामि यदि वा साक्षी तवैषात्मजः ।
एकः पूर्वमुदायुधैः सुबहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवप्रणयिनस्तावन्त एवार्जुनाः ॥२६९॥

रौद्रात् करुणनिष्पत्तिर्यथा—

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तैः क्षणं नेत्रिभि-
र्दृष्टो दर्भविघातजिह्मितमुखैरभ्याहतप्रक्रमः ।
रामान्वेषणतत्परः पुरजनैरुन्मुक्तहाहारवः
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥२७०॥

1. 'विभावनाकारणत्वमेतदेव व्यनक्ति हि'—इति सम्यक् ।

बीभत्साद् भयानकनिष्पत्तिर्यथा—

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्बन्धोद्धुतं धावति ॥२७१॥

एतन्मतमाक्षिपति—

**इत्याम्नासिषुराचार्याः केचिदेतन्न रोचते ।**
**अन्यतोऽपि हि दृश्येत हास्यादीनां समुद्भवः ॥२४२॥**

पूर्वन्यायेनैवमपि प्रसज्येतेति तात्पर्यम् ।

शृङ्गारादन्यतो हास्योत्पत्तिर्यथा—

हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं
स्रस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च ।
सन्नद्धा जघने च वल्कलपटी पाणिश्च धत्ते धनुः
पृष्टं भो जनकस्य योगिन इदं शान्तं विरक्तं मनः ॥२७२॥

शृङ्गारादपि न दृश्यते । यथा—

चिन्ता(म ?)णिअदइअसमाअमम्मि कअमण्णुआइ भरिऊण ।
सुण्णं कलहाअन्ती सहीहिं रुण्णा ण ओहसिआ ॥२७३॥

रौद्रादन्यतोऽपि करुणो यथा—

आर्द्रे नागाजिनमवयवग्रन्थिमद् बिभ्रदंसे
रूपं प्रावृड्(ज ?)घनरुचि महाभैरवं दर्शयित्वा ।
पश्यन् गौरीभयचलकरालम्बितस्कन्धहस्ता-
मन्ये प्रीत्या द्रुतमिव [1]भवाद् वज्रदेहोऽपि जातः(?) ॥२७४॥

रौद्रादपि न दृश्यते । यथा—

कमले कमलोत्पत्तिर्न दृष्टं भुवि न श्रुतम् ।
अत्र दृष्टमहो चित्रमहो चित्रमिदं पुनः ॥२७५॥

वीरादपि न दृश्यते । यथा—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥२७६॥

---

1. भवाद् वज्र—इति सङ्गतः पाठः ।

बीभत्सादन्यतो भयानकोत्पत्तिर्यथा —'यस्मिन्ननैश्वर्यंकृतव्यलीकः' (२७७) इत्यादि ।

बीभत्सादपि न दृश्यते । यथा—

तत्क्रूरदन्तकरपत्रनिकृत्तसत्त्व-
सङ्घातनिस्सरदसृग्भृतकूर्चगुच्छम् ।
वक्त्रं वपुश्च विकृताकृति दीर्घबाहो-
रार्येण राक्षसकुतूहलिना न दृष्टम् ॥२७८॥

**तस्मान्मनोविकासादिर्हास्यादेरपि कारणम् ।**

न त्वालम्बनविभावभूताच्छृङ्गारादेरित्यर्थः । न च शृङ्गारादिप्रकृतिकं हास्यादि वक्तुं युक्तम् । स्थायिभेद एक एव स्थायि चेत् , शृङ्गारहास्यव्यपदेशसंस्कारः शृङ्गारानुकृतितो हास्या(दु ? द्यु)त्पत्तिरिति चेत्, अत्रापि तत्रापि नियमः । वीरानुकृतितो हास्या( दु ? द्यु)त्पत्तिः [1]ह भवस्तदितरनिमित्तसंयुक्तं ( ? ) विकासादिरेव हास्यादेरपि हेतुरिति समञ्जसम् ।

**विशिष्टादृष्टजन्म यमजमीनामन्तरात्मा ( ? ) ॥२४३॥**
**स्वात्मगामिगुणोद्भूतेरेको हेतुः प्रकाशते ।**
**विभावैश्चानुभावैश्च स्थायिभिर्व्यभिचारिभिः ॥२४४॥**
**सचेतसा रस्यमानो रसतां प्रतिपद्यते ।**
**तथाभिमानोऽहङ्कारः शृङ्गार इति चोच्यते ॥२४५॥**
**सहकारियुतैर्भावैरर्थसिद्धिरतः परम् ।**
**अहङ्काराख्यया किञ्चित् किमर्थं गुरु कल्प्यते ॥२४६॥**

एते निगदव्याख्याताः ।

ननु किमे( तं ? ते ) रत्या(द)यः ( से ? स्वे )भ्यः स्वेभ्य आलम्बनेभ्य उ(त्पा ? त्प)द्यमानाः सर्वस्याप्युत्पद्यन्ते, उत कस्यचित् ? यदि तावत् सर्वस्य, तदा सर्वजगद् रसिकं स्यात् । न चैतदस्ति, यतः कश्चिदास्तिकः, कश्चित्तु नीरस इति दृश्यते । न च दृ(ष्टि ? ष्ट)विपरीतं शक्यमनुज्ञातुम्, अतो न सर्वस्य रत्यादयो जायन्ते । अथ कस्यचित्, तत्र नियमनिमित्तमभिधानीयं स्यात् । एतत् किञ्चिदस्तीति चेत्, तद्

---

1. ह्रीह्रीभावः, तदितरनिमित्तसंयुक्तो—इति सन्दर्भोचितः पाठः ।

दृष्टमदृष्टं वा स्यात्। न तावददृष्टम्, उपलभ्यमानत्वात्; दृष्टं तु साधारणम्, पूर्व एव[१] दोषः। अ(थ?था )साधारणं किञ्चिदाश्रये किं क्व तर्हि, क्व ( ? )[1] स एवाहङ्कारिसंज्ञयोच्यत इति अहङ्काराश्रयणेऽप्येवं वा कल्पयितुं शक्यते। विशिष्टादृष्टजन्मा सः। तद् दृष्टं कस्यचित् तदिति चेत्, तर्हि तददृष्टमेव विभावादिभिः सह रत्युत्पन्नात् तावद( द )पेक्षणीयम्, किं कल्पनागौरवेण सर्वोत्पत्तिमतां निमित्तमदृष्टं इत्यत्र कारणसन्निपातेऽप्यदृष्टे वैकल्यात् कार्यानुत्पत्तिदर्शनाद् भावसमुत्पत्तिरिति यत् तत् साम्प्रतम्।

रसं विनापि रत्यादेस्तत्र तत्रोपलक्षणम्। यथा—

हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः २७९।

इत्यादि।

मनो (विना ?) विकासविस्तारक्षोभविक्षे(प)वादिनाम्।
कैश्चिदाक्षिप्यते पक्षस्तेषामाकर्ण्यतां वचः ॥२४७॥

भावा एकोनपञ्चाशत् प्रकर्षमभिलम्भिताः।
(वि)भावनीयास्ते कस्माददृष्टेति नियम्यते ॥२४८॥

कथं चतुरवस्थत्वे रसस्याष्टप्रकारता।
कथं चतुरवस्थत्वं भवेद् वा पारमार्थिकम् ॥२४९॥

विकास एव विस्तारः क्षोभो विक्षेप एव यत्।
तद्वैरूप्यमवस्थाया वक्तुं युज्येत नान्यथा ॥२५०॥

(नादस्त?आनन्द)स्यैकरूपस्य कथं भेदो विकल्प्यते।
विसंस्थुलत्वं मनसः क्षोभविक्षेपवाचित्त (?)[2] ॥२५१॥

स्वरस्योपलभ्येत सदानन्दोपपद्यते ( ? )[3]।
आनन्दस्य विकासादि न लिङ्गं कार्यमेव न ॥२५२॥

न कार(णत्वं?णं) न रूपं वा तस्मिंश्चेतो निमीलति।
(ना?न)कारणं हि रत्यादेस्तस्य तस्योपलब्धितः ॥२५३॥

---

1. अथासाधारणं किञ्चिदाश्रयेत, किं तर्हि, क्व—इति युक्तः पाठः।
2. 'क्षोभविक्षेपवाचि तत्' इति स्यात् पाठः।
3. स्वरस्योपलम्भने तावदानन्दश्चोपपद्यते—इति पाठ ऊहनीयः।
१. एव—इति क० पु० नास्ति।

अस्य प्रयत्नरूपस्य रसस्य सुखरूपिणः ।
तादात्म्यं च न शक्येत वक्तुं वर्षशतैरपि ॥२५४॥
तस्माच्चित्तानुकूल्येन दुःखादिष्वपि यो भवेत् ।
सुखाभिमानस्य रसः पात्राणां मुख्य एव सः ॥२५५॥
ततोऽभि(धी?नी)यमानं वा श्रूयमाणमथापि वा ।
साध्वेतदेतदिति तं भावयन्तः सभासदः ॥२५६॥
प्रीतिमात्रं प्रपद्यन्ते न मुख्यस्तद्गतो रसः ।

इति ।

स्थायि(कि ? )सात्त्वि( कि ? क )व्यभिचारिभेदादेकोनपञ्चाशद् भावा उक्ताः । ते सर्वेऽपि प्रकर्षापहानिनो भावनीयाश्च । तस्माद् रसस्यैकोनपञ्चाशत्प्रकारता किमिति नोच्यते, किमित्यष्टप्रकारतानिबन्धः ? अथानन्दस्य मनोविकासविस्तारक्षोभविक्षेपैश्चतुरवस्थत्वेनाष्टप्रकारता कल्प्यते, तदपि न, चतुरवस्थत्वे चतुष्प्रकारता कल्पनीया स्यात् । न च समस्ति पारमार्थिकमवस्थाचतुष्टयम् । ततो विकासविस्तारयोः क्षोभविक्षेपयोश्च परस्परं न भेदः । अतोऽवस्थाद्वैरूप्यमेव वक्तुं युज्यते । कथं वा तस्यैकरूपस्य भेदकल्पनम् ? किञ्च, मनसोऽसंस्थुलता क्षोभः, विशिष्टः क्षेपो विक्षेपः, तावानन्दी नोपपद्येते, अस्य मनःस्वार्थविलोपलभ्यमानत्वात् । अपि च आनन्दस्य विकासादि (न) किमपि भवितुमर्हति । तथाहि—न लिङ्गम्, व्यभिचारित्वात् । मनागपि मनो विकसति । किञ्च, आनन्दे चेतो निमील(य ? )त्येव । अत एव न कार्यम्, मनःकर्मकं ह्येतत् । न च कारणम्, अद्भुतादेः पश्चाद् विकासविस्तारदर्शनात् । रत्यादिर्हि शृङ्गारादेः कारणम्, न च रूपम्, विकासादेः प्रयत्नरूपत्वात्, आनन्दस्य सुखरूपत्वात् । तस्मादनुपपन्न एवास्वादे मनोविकासाद्युपभोगः, अतो दुःखादिष्वपि सुखाद्यनुभवादभिमानरूपो रसः पात्रेषु मुख्यः । तद्गतं तं प्रमाणतोऽवगम्य कवयो न्नवदन्ति । तं च श्रूयमाणमभिनीयमानं वा साध्वेवमेतदिति भावयन्तः सामाजिकाः प्रीतिमात्रमभिगच्छन्ति । न मुख्यस्तेषु रसः, उपचरितस्तु रसव्यपदेश इत्यर्थः ।

उच्यते तान् प्रति स्पष्टमुत्तरं तु यथाक्रमम् ॥२५७॥
अयेन्यामपि भावानां रसत्वादिप्रसञ्जनम् ।
गतं पुरैव रत्यादेर्लवणाकरसाम्य(मे ? )तः ॥२५८॥
आनन्दस्यैकरूपत्वाद् भेदो वक्तुं न युज्यते ।

तथापि युज्यते तत्र चन्दनादिसुखेष्विव ॥२५९॥
धर्मादीनां प्रभेदेन शृङ्गारस्य भिदा यथा।
शब्दोपस्थाप्यरूपस्य क्षोभस्यापि रसं प्रति ॥२६०॥
हेतुत्वं शब्दशक्त्यैव न दृष्टं नोपपद्यते।
कारणत्वमवस्थानां सम्मतिर्नान्यदिष्यते ॥२६१॥
एतासां च निमित्तत्वा तानाद्यहेतुता (?)[1]।
सामाजिकानां च रसे शरणं संविदेव नः ॥२६२॥
सामाजिकानां (च ?) हृदये रसपोषस्तथा भवेत्।
यथा पात्रगतो नूनं गौण इत्येव मन्यते ॥२६३॥

इति।

भावाः सर्वे रसीभवितुमर्हन्तीति यदुक्तम्, तत्र, स्थायिनामेव लवणाकरत्वात्। त एव हि चित्तेऽवतिष्ठमानाः सर्वानपि सम्बन्धिनः स्वरूपं नयन्तो वर्धितुं क्षमन्ते। स्यादेतत्, कोऽयं नियम इति को जानीयात्। नहि वस्तुनः स्वभावः पर्यनुयोगमर्हति। अनुभूतिरेव वात्र प्रमाणम्। कथं चतुरवस्थत्वेऽष्टप्रकारतेत्य(त्रा ?)पि न। साम(ग्रच ? ग्रय)न्तरसम्पत्तेः। रत्यादिसहितो विकासः शृङ्गारसामग्री, हासादिसहितस्त्वन्यैव हास्यसामग्री। एवमन्यत्रापि। न विकासविस्तारयोः क्षोभविक्षेपयोश्च पर्यायता। न विकसितं विस्तृतमिति क्षुभितं विक्षिप्तमिति भण्यते। एकरूपस्यानन्दस्य कारणवैचित्र्यात् चन्दनसुन्दरीपरिष्वङ्गसङ्गीता(लि?दि)सुखवद् भेदव्यवहारो घटते। शब्दोपस्थापना-माहात्म्येन क्षोभादेः प्रतिकूलस्यापि रसौपयिकत्वं सह्यते। नहि दृष्टेऽनुपपन्नं नाम। रसस्य विकासादि न किमपीति फल्गु कारणम्। यतः पश्चाद्भावि विकासादि, फलरूपमन्यदेव। एतेन विक्षोभितं विस्मयानुदा विकसितमित्यादि समाहितम्। न निमित्तं विकासादि। उपादानरत्यादिजनितो निरतिशयगुणसम्प्रयुक्तपात्रालम्बनतत्संविधानौचित्यभावनावतां सामाजिकाना(मा )त्मन्युदञ्चमान आनन्दो रस इत्युच्यते। प्रमाणमस्मिन्ननुभवः संविदेव भ(ग ? )वति प्रीतिविषयसत्त्वोपगमे शरणमिति उक्तमाचार्यैः।

अत्र युक्त्यन्तरम्—

रसस्तदर्थं कविना वाक्येन प्रतिपादितः।

तदर्थं सामाजिकरसार्थमिति यावत्।

---

1. निमित्तत्वात् तासामेवाद्यहेतुता—इति समीचीनः पाठः।

कथमपदार्थीभूतस्य वाक्यार्थत्वमिति चोदयति—नन्वित्येकोत्तरैर्दशभिः श्लोकैः—

**नन्वन्विताभिधानेऽपि तथैवाभिहितान्वये ॥२६४॥**

**पदार्थानेव वाक्यार्थमाहुरन्वितरूपतः ।**

उभयोरपि पक्षयोः पदार्थस्यैव वाक्यार्थत्वमित्युक्तत्वात् ।

तदुभयं क्रमेण प्रदर्शयति—

**तत्रान्विताभिधायीनि पदानीति कृ(शा ? ता)धियाः ॥२६५॥**

**प्रधानगुणभावेन लब्धान्योन्यसमन्वयान् ।**

**पदार्थानेव वाक्यार्थं संगिरन्ते विपश्चितः ॥२६६॥**

पदानामावापोद्धाराभ्यामन्वितार्थविष( यम ? यं )सामर्थ्यमवगम्यते इति यावत् ।

पदार्थेनान्वितोऽर्थश्चेदवगम्यते, प्रतियोगिनामानन्त्यादन्वयानन्त्यम्, ततोऽन्वितानन्त्यम् , ततश्च सम्बन्धग्रहणं दुष्करम् । अगृहीतशक्तेश्च वाचकत्वे व्यभिचारप्रसङ्गः । एकस्माच्छब्दात् सर्वार्थप्रतीतिः स्यादित्याह—

**यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।**

**तत्तदन्वितरूपेण पदैः स्वार्थोऽभिधीयते ॥२६७॥**

एवं व्युत्पत्त्याश्रयणे (न) कश्चिद् दोष इत्यर्थः । उक्तं हि—

आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान् ।
स्वार्थानाहुः पदानीति व्युत्पत्तिः संश्रिता यदा ॥
आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन । इति ।

नन्वन्वितानां पदार्थानां भूयस्त्वाद् भूयांसो वाक्यार्था वाक्यादीनि च स्युरित्यत्राह—

**भूयांसो यद्यपि स्वार्थाः पदानां ते पृथक् पृथक् ।**

**प्रयोजनतया ह्येको वाक्यार्थत्वेन सम्मतः ॥२६८॥**

**तत्प्रतीत्येककार्यत्वाद् वाक्यमप्येकमुच्यते ।**

कथं पुनरेकस्य प्रयोजन(त्व)मित्यत्राह—

**प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥२६९॥**

विशिष्टप्रधानप्रतीत्यर्थं हि गुणप्रतिपादनम्। तत् तत्रैक्यत्वात्[1] (?) तात्पर्यविषय एव शब्दः प्रमाणम्। विशिष्टप्रतिपत्तिर्नैकपदनिबन्धनेति वाक्यमेव तत्र प्रमाणमित्यर्थतः स्यात्।

पदमेव संसर्गस्य प्रतिपादकम् न तु पदार्थ इत्यत्राह—

पदान्येव समर्थानि वाक्यार्थस्यावबोधने।
विशेषान्वितवादीनि भागशो भागशालिनः ॥२७०॥

स्वार्थाभिधानमात्रा(णि निर्वर्त्य ?न्निवृत्त)व्यापारैः पदैरभिहिता अर्था एव वाक्यार्थमवगमयन्ति चेत्, उभयत्रापि शक्तिर्जल्पनीयेति गौरवं स्यात्। अशाब्दत्वं च वाक्यार्थस्य प्रसज्येतेत्यभिप्रायः।

अपरे केचिदाचार्या वदन्त्यभिहितान्वयम्।
पदैरभिहितस्वार्था आकाङ्क्षादित्रयान्विताः ॥२७१॥
सामर्थ्याद् गमयन्त्येकं फलं वाक्यार्थम(न्यत्वम्? न्वितम्)।

तदा ह् ) भाष्यकारः— पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि। अथेदानीमपदैः पदार्थाः प्रतिपन्ना वाक्यार्थमवगमयन्ति" इति।

वाक्यार्थस्याशाब्दत्वं परिहरति—

न विमुञ्च(ति?न्ति) सामर्थ्यं वाक्यार्थानि पदानि नः ॥२७२॥
वाक्यार्थमितरेषां तु प्रयुक्तौ कारणं स्मृतम्।
पाके ज्वाले च काष्ठानां पदार्थप्रतिपादनम् ॥२७३॥

अवान्तरव्यापारभूतस्य पदार्थप्रतिपादनस्यैव पदशक्तित्वाद् वाक्यार्थप्रतिपत्ति ( प्रति ) न शक्त्यन्तरं कल्पनीयमिति शक्तिकल्पनागौरवं च परिहृतं भवति।

एवं स्थिते रसस्य वाक्यार्थत्वं न सिद्ध्यतीत्यत्राह—

इत्याहृत्य प्राणाध्यां[2] वा (?) पदार्थस्यैव कीर्तितम्।
वाक्यार्थत्वं पुराचार्यैरुभयोरपि पक्षयोः ॥२७४॥
कथमत्रापदार्थस्य वाक्यार्थत्वं रसस्य वा।

इति।

---

1. तत्रैकत्वात्—इति पाठः समुचितः।
2. प्रमामं—इति समीचीनः पाठः।

परिहरति—

उच्यते सत्यमस्त्येव पदार्थानां समन्वयः ॥२७५॥
वाक्यार्थस्तस्य शब्दस्य तात्पर्ये हि(प्राणाःप्रमाण)ता ।
यत्र वाक्यं न तन्मात्रे कदाचित् पर्यवस्यति ॥२७६॥
अर्थ-प्रकरणौचित्य-देश-कालादियोगतः ।
तत्र तद्द्वारमाश्रित्य वक्तुरर्थं विवक्षितम् ॥२७७॥
स्वयं तात्पर्यवृत्त्यैव प्रतिपादयतीति च ।
व्युत्पत्तिकालेऽवगतं वृद्धानां व्यवहारतः ॥१७८॥

अपदार्थोऽपि वाक्यार्थो रसस्तात्पर्यवृत्तितः ।

इति ।

( सत्यत इति ? ) सत्यम्, पदार्थान्वियो वाक्यार्थो यदि तात्पर्यविषयः स्यात् तात्पर्याभावे [1]पदान्वयस्याप्यवाक्यार्थत्वादन्यस्यापि तात्पर्यविषयस्य वाक्यार्थत्वाच्च । यथा विषं भुङ्क्ष्व'इति । अत्र हितैषिणः पितुरत्र विषभक्षणे तात्पर्याभावाद् विषभक्षण-सदृशादनिष्टगृहभोजनान्निवृत्तिरभिप्रेता भवरमार्थो (?)[2] भवति । एतदपि व्युत्पत्तिसिद्धम् । तस्मादत्रापदार्थस्यापि रसस्य तात्पर्यगोचरत्वाद् वाक्यार्थत्वं न विहन्यत इत्यर्थः ।

उक्तं हि— 'आकाङ्क्षासन्निधियोग्यतावशाद् वक्ष्यमाणरूपाणां पदार्थानां समुन्नये तात्पर्यार्थो विशेषवपुरपदार्थो वाक्यार्थः समुल्लसति'' इति ।

स्यादेतत् । अद्वितीयकक्ष्यावगाहि तात्पर्यं प्रथमम्, अतो विभावादिपदार्थसंसर्ग-प्रतीतिमतो वाक्यस्य तदविनाभूतरामादिरसलक्षणा द्वितीयकक्ष्या । तदतिलङ्घित-तृतीयपर्वभूततत्सदृशसामाजिकरसप्रतिपादनं ध्वनेर्विषयः, कथं तात्पर्यस्येति । उच्यते— यथा तात्पर्यमनुद्देश्यत्वात् प्रथमं पर्व विहाय द्वितीयमवगाहते, तथैतदपि परित्यज्य तृतीयमपि स्पृशेत् । उक्तमाचार्यैः—

तत्तत्कक्ष्याविभेदेऽपि बहुधा प्रसृता सती ।
[3]तात्पर्यवित्तिरुद्देश्यं यावन्न प्रतिहन्यते ॥
एतावतैव विश्रान्तिस्तात्पर्यस्येति किं कृतम् ।
यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम् ॥

---

1. पदार्थान्वय—इति साधु ।
2. रभिप्रेतात्र परमार्थो—इति साधुतरः पाठः ।
3. तात्पर्यवृत्ति—इति प्रकरणानुरोधी पाठः ।

तत्तत्कक्षाविभागेन वाक्यतात्पर्यकन्दली ।
यथाऽस्त्यभिधा वस्तुध्वनिर्वा वृत्तिरेव वा ॥

यद्वा वृत्तित्रयादन्यत् किञ्चित् तात्पर्यमिष्यते ।
न तु वृत्त्यन्तरं कल्प्यं व्युत्पत्तावप्रसिद्धितः ॥

लौकिके शब्दवृत्तेऽपि योज्या काव्यस्य पद्धतिः । इति ।

प्रतीतिक्रमः कक्ष्याभेदेन कल्पनम् , अतो वृत्तितात्पर्ययोर्भेदोपन्यासः ।

रसस्य तात्पर्यविषयत्वं प्रदर्शयति—

**कविश्च रसमुद्दिश्य मु(रति?क्ति)मुद्राः करोति हि ॥२७९॥**

ननु रसो नाम सामाजिकाश्रयः । तस्यै(व) वाक्यार्थत्वमिष्टम् । तन्न घटते, रामाद्याश्रये रसे कवेरुद्देशादित्याशङ्क्य (ते ? ने)त्याह—

**सामाजिकानां हृदयं रस (एव ? येय)महं कथम् ।**
**इति प्रवर्तते काव्ये कविस्तत्परमानसः ॥२८०॥**

सत्यमस्त्युद्देशः सामाजिकरसं प्रति, किन्तु ( त )मुत्पादयितुम्, न प्रतिपादयितुम् । यदर्थप्रतिपत्तिं प्रत्युद्देशः, स तु वाक्यार्थः ।

ननु जैमिनेः 'दर्शनस्य परार्थत्वात्' ( अ० १, पा० १, अधि० ६, सू० १८ ) इत्युच्चारणस्य परप्रतिपत्त्यर्थत्वमेव विवक्षितम् । 'उच्चारणतादर्(थस्या ? र्थ्या)दर्थसिद्धिः' इति वदतां परितो( वि ? )षादीनामप्येतदेव मतम् । इतरथा ख्यातिलाभपूजादीनामपि शाब्दत्वप्रसङ्गादित्यत आह—

**विशिष्टैः शब्दसन्दर्भैर्ज्ञापयेयं रसं यतः ।**
**इति प्रवृत्ते सुकवौ तेषामुत्पद्यते रसः ॥२८१॥**

ज्ञप्तावुद्देश उत्पत्तिर्हेतु( बा।ायते ? बलायत्ते)त्यर्थः । उत्पन्नस्य रसस्य स्वयंप्रकाशत्वाद् वा, अन्यथासिद्धायां ( भवि[1] ?) प्रतिपत्तौ पुरस्तात् त(स्य ? स्या )मेवोद्देशादवर्जनीयसिद्धोत्पत्तिर्वाक्यार्थत्वं न विहन्ति । विपर्ययः किं न स्यादिति चेत्, न ; प्रमाणं हि वाक्यं मतमिति तामेवोद्दिशति । तस्मात् तदुपादानास्तत्रैव व्या(ह्रि ? प्रि)यन्ते । अतः सामाजिकगतो रसः प्रतिपाद्यतयोद्देशविषयः, नो(पप ? त्पा)द्यतयेति सिद्धम् ।

किञ्च, न वाक्यस्य ज्ञप्त्युत्पत्त्योरेको व्यापारः, उद्देश्यमप्येकमिति च । अतो रसकाव्ययोर्भाव्यभावकत्वमपि निर्व्यूढम् । अत्रोक्तमाचार्यैः—

---

1. सिद्धायामपि प्रतिपत्तौ—इति सङ्गतः पाठः ।

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा क्रिया यथा।
वाक्यार्थः (का)रकैर्युक्ता स्थायी भावस्तथेतरैः॥
रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः॥ इति।

वाक्याद् रसप्रतिपत्तौ प्रमाणमाह—

**प्रत्यक्षं दृश्यते श्रोतुः प्रबन्धश्रुत्य(न)न्तरम्।**
**आनन्दसंविदुद्भूतिलिङ्गं च पुलकादिकम्॥२८२॥**

वा(क्या)र्थश्चेद् रसः, 'शृङ्गारी गिरिजानन—' इत्यादिभिर्वाक्यैः कथं न प्रतिपाद्यत इत्यत्राह—

**तत्तद्रसाविनाभूत-विभावादि-समर्पकः।**
**विशिष्टो हि कवेर्गुम्फो रसस्य प्रतिपादकः॥२८३॥**

इति।

तत्तद्विभावादिसमर्पकत्वातिरेके गुणगुम्फस्य यो विषयः, तं प्रदर्शयति—

**तत्तद्रीतियुतं काव्यं तत्तद्रीतिसमन्वितम्।**
**तत्तद्रीतिरसं सूते तत्तज्जाति यथोचितम्॥२८४॥**

रीतिसामान्यलक्षणम्—

**वैदर्भ्यादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।**
**रीङ् गताविति धातोः सा व्युत्पत्तौ रीतिरुच्यते॥२८५॥**

वचनविन्यासक्रमो रीतिरित्यर्थः।

केषाञ्चिद् रीतेर्विशेषलक्षणमाह—

**समा(स)वृत्त्यनुप्रासोपचारोत्कर्षभेदतः।**
**वैदर्भी रीतिरावन्ती पाञ्चाली गौडिका तथा॥२८६॥**

**चतस्रो रीतयो लक्ष्या इति केचन मन्वते।**

यदसमस्तमतिसुकुमारबन्धमनुपचारवृत्ति श्रुत्यनुप्रास(योगि)योगवृत्तिमद् वचः, सा वैदर्भी। यदीषत्समस्तमतिसुकुमारब(न्ध ? न्धं) नाप्युपचारवृत्ति लाटानुप्रासयोगि योगरूढिमद् वचः, सावन्ती। यदनतिदीर्घसमासमतिस्फुटबन्धमत्युपचारवृत्तिमत्* पादानुप्रासयोगरूढिपरम्परागर्भं वचः, सा गौडीति।

---

* इतः परं ग्रन्थभागस्त्रुटितो वा लुप्तो वेति प्रतीयते।

एतदाक्षिपति—

**समासमात्रमेवेष्टं भो[1] (?) काव्यस्य वर्त्मनः ॥२८७॥**

इति ।

यदसमस्तमित्यादि प्रत्येकं समुदायाभ्यां लक्षणं भवितुमर्हति ।

यदि प्रत्येकम्—

**विलासमसृणोल्लसन्मुसललोलदोःकन्दली-**
**परस्परपरिस्खलद्वलयनिस्वनोद्दन्तुराः ।**
**हरन्ति कलहुङ्कृतिप्रसभकम्पितोरुस्तन-**
**त्रुटद्गमकसङ्कुलाः कलमखण्डिनीगीतयः ॥२८०॥**

इत्याद्यनतिस्फुटबन्धलक्ष(ण)म् ।

**तत्रासमासा वैदर्भी रीतिः सर्वत्र सम्मता ।**

यथा—

**विहाय वेश्मानि शुचीनि यस्यां दिवं मघोनः प्रणयेन याताः ।**
**इक्ष्वाकवो नेक्षितुमाद्रियन्ते वीरा विमानानि वितानवन्ति ॥२८१॥**

असमासेत्यनेनाल्पसमासत्वं विवक्षितम् । त्रिचतुरपदसमासोऽप्येकः सह्यत इति केचित् । उक्तं हि—

यथोकान्तरूपाणि यत्रोन्मीलन्ति भूयसा (?) ।
तत्रीतिः प्रत्यभिज्ञानात् तत्तसंज्ञा भजन्ति ताः ॥

यथा—

**कथय किमिति बाले का त्वमित्यालपंस्त्वां**
**झटिति किल दुकूलस्याञ्चले धारयामि ।**
**अगमदथ निकेतं क्वाप्यसौ शारयन्ती**
**नवकुवलयमालामांसलैर्दृष्टिपातैः ॥२८१॥**

**तत्पाकेनौजसा युक्ता स्यादावन्तीति संज्ञिता ॥२८८॥**

तत्पाकेन वैदर्भीपाकेन । ओजसा समासवत्त्वेन । असमासा, अल्पसमासा वा वैदर्भी । तस्याः पाकविशेष एव उत्तरा रीतयः । उक्तं हि—

अद्यानामाद्या रीतिरस्य विकल्पना ।
उत्तरोत्तमे धत्ते रीतय पुरुषोक्तिषु (?) ॥ इति ।

1. गौडां—इति तु सङ्गच्छते ।

आवन्ती यथा—

एतानि निस्सहतनोरसमञ्जसानि
शून्यं मनः पिशुनयन्ति पदानि तस्याः ।
एते च मार्गतरवः कथयन्ति ताप-
मालम्बितोज्झितपरिम्लपितैः प्रवालैः ॥२८३॥

त्रिचतुरपदसमासा आवन्तीत्यर्थः । तत्पाकेन च पाञ्चाली यथा—

धीरास्त एव धवलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥२८४॥

यद् वा—

धात्राभिघातदयितागतजर्जराणां
गण्डस्थली-लुठितकुण्डल-ताडितानाम् ।
क्षोभस्फुटत्(कटक)कोटिविघट्टितानां
नादोऽभवज्झणझणोन्मुखरो मणीनाम् ॥२८५॥

पञ्चषपदसमासा पाञ्चालीत्यर्थः ।

गौडी तत्पाकतो यथा—

लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धबन्धै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।
खण्डेषूद्दण्डपिण्डीतगरतरलकाः प्रापिरे येन वेला-
मालङ्घ्यो त्तालतल्लस्फुटित-पुटकिनीबन्धवो गन्धवाहाः ॥२८६॥

यद् वा—

यस्यावस्कन्दलीलापलितबलपरिस्पन्दखर्वीकृतोर्वी
संरम्भोत्तम्भनाग्रोन्नमितभरनमत्कन्दरासन्धिरासीत् ।
(शेषा ? शेषो)विस्तारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नषण्डः ॥२८७॥

इतरनिराकरणार्थमाह—

**एतच्छायानुपातिन्यो लाटमागधिकादयः ॥२८८॥**

इति ।

विदर्भादिषु भवा वैदर्भ्यादय इति कथयन्ति । तन्न साध्वीयः, अन्यत्रापि दृष्टेः । ततः पूर्वाचार्यसंज्ञा ।

एता विनियुङ्क्ते—

शृङ्गारो भाति वैदर्भ्यां नियतं करुणेऽपि[1] वा ।
पाञ्चाल्यामपि शोभन्ते वीरहास्याद्भुताः पुनः ॥२९०॥

इति ।

गौड्यां रौद्रस्तथा वीरः प्रदीप्येत क्वचित् (क्वचित्) ।
आवन्त्यामितरौ भातः परे साधारणीं विदुः ॥२९१॥
पाञ्चालीगौडिकामध्ये यथा रीतिं न मन्वते ।
तथा वैदर्भपाञ्चाल्योः केचिन्मध्यां न शासति ॥२९२॥
[2]केचिन्मध्यान्नेच्छन्ति समासाल्पबहुत्वतः (?) ।
भावाभाव(व)दप्येते मन्यन्ते वृत्तियोगिनि ॥२९३॥
गुणोत्कर्षातिरेकेण किमन्यत् सम्भवेदिति ।
रीतिमेकामपीच्छन्ति न चान्ये भामहादयः ॥२९४॥

गुणोत्कर्षः, माधुर्योत्कर्षः, अपरश्चौजसः ।

अथ वृत्तिलक्षणम्—

या विकासेऽथ विस्तारे क्षोभविक्षेपयोरपि ।
चेतसो वर्तयित्री स्याद् वृत्तिः सापि चतुर्विधा ॥२९५॥
कैशिकी भारती च स्यात् सात्वत्यारभटीति च ।
सुकुमारार्थसन्दर्भा कैशिकी तासु कथ्यते ॥२९६॥

शशिरुचिषु दलेषु नागवल्ल्या विचकिलदामनि चन्दने च हृद्ये ।
कुवलयिनि पुराणशीधुपात्रे तरलदृशामपतन् दृशः प्रिये च ॥२९८॥

अर्थस्य सौकुमार्येण केवलं भाति भारती ।

---

1. करुणोऽपि—इति सङ्गच्छते ।
2. केचिन्मध्यामपीच्छन्ति—इति सन्दर्भोचितः पाठः ।

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥२८९॥

**अर्थ(स्य ? स्या)सौकुमार्येण केवलं सात्वती स्मृता ॥२९७॥**

बन्धौ द्वावपि तावनार्यचरितप्राप्यप्रतापोदयौ
भीमो भीमपराक्रमः स च मुनिर्भास्वत्कुठारायुधः ।
एकेनामृतवद् विदार्य करजैः पीतान्यसृञ्जि द्विषा-
मन्येनापि हृताहितास्रसरसि स्नातं रुचः शान्तये ॥२९०॥

**उभयोर्वैपरीत्येन भवत्यारभटी पुनः ।**

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥२९१॥

**कैशिकी भारतीति द्वे भातः शृङ्गारहास्ययोः ॥२९८॥**
**चकास्ति वीराद्भुतयोः सात्वत्यारभटी पुनः ।**
**रौद्रादिषु प्रदीप्येत करुणे नेति केचन ॥२९९॥**

'वृत्तिः सर्वत्र भारती' इत्यर्थवृत्तिपरम् । उक्तं हि—

तद्वदर्थानुसन्धिभ्यो द्रष्टव्या वृत्तयः पराः ।
नेतृचेष्टात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ॥
गीतिनृत्तविलासाद्यैर्मृदुः शृङ्गारचेष्टितैः ।
नर्मतत्स्फिञ्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका ॥
विशोका सात्वती सत्त्वशौर्यत्यागजयार्जवैः ।
सल्लापोत्थापकावस्यां साङ्घात्यः परिवर्तकः ॥
क्रोधेन्द्रजालसङ्ग्रामप्रायैरारभटी मता ।
संक्षिप्तिका स्यात् सम्फेटो वस्तूत्थानावपातने ॥

भारती संस्कृतप्राय*

---

* इतः परं मातृकायाः पत्र नष्टमिति प्रतिभाति ।

विता यथा 'एसो एसो वज्जणिहारुणचपेडामोडिअखत्ताणेअणरतुरअमतंग-लुग्गारभरिअगलगुहागम्भीरगम्भुत्तालगुलुलूरणसद्दसंदब्भपडिरवाभोअभीसणो विणट्ठणि-ट्ठविदासेसजणणिवहो दुट्ठसद्दूलो कअंतलीलाइदं करेदि' इति ।

आविद्धवाक्ये मध्या यथा—

"यस्य च मदकलकरिकुम्भपीठपाटनमाचरतो लग्नस्थूलमुक्ताफलप्रकरेण दृढ-मुष्टिनिष्पीडननिष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकवाटपुट[1]-घटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम राजलक्ष्मीः ।"

एतानि विनियुङ्क्ते—

**मध्यायामतिदीप्येत शृङ्गारो हास्य एव वा ।**
**वीररौद्रौ द्रुतायां स्तः करुणस्पृग् विलम्बितम् ॥२००॥**
**मिश्रां परे भजेते द्वाविति प्रायेण दृश्यते ।**
**आर्यादयो यथान्यायं संस्कृतेन तु गुम्फिताः ॥२०१॥**
**ता एव गाथा भाषाभिरन्याभिः परिकल्पिताः ।**
**यथादेशं सन्निबद्धा द्विपदी(द्वि? त्रि)पदादयः ॥२०२॥**
**शृङ्गार-हास्य-करुण-वीराद्भुतसमन्विताः ।**
**पुष्णन्ति महतीं शोभामिति प्रायः कवेरिति ॥२०३॥**

यथा—

**बीब्राहरितणरअणपणकिहलेसरिआणंडुअमरअरसंचिअपाविअ उसेसह विण्णुवमुद्दलकेरावणगेरखेलादिरेपुचामोजअलचिचहहत्थेघेरूण**" (?)

इत्यादयः ।

अथौचित्येनापि गतिनियम उक्तः—

कश्चिद् गद्येन पद्येन कश्चिन्मिश्रेण शक्यते ।
कवितुं कश्चन द्वाभ्यां काव्यैर्व्यः कश्चन त्रिभिः ॥

अथ जातिलक्षणम्—

**सा जातिरिति कथ्येत सन्दर्भो यत्र जायते ।**
**सैषा (च) प्रथिता लोके (न ?) संस्कृतप्राकृतादिका ॥२०४॥**

---

1. कवाटपुट—इति युक्तः पाठः ।

**शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ।**
**नोच्यतेऽन्यत्र सिद्धत्वाद् भाषाणां लक्षणं मया ॥२०५॥**

आदिशब्देनापभ्रंशः । तत्र संस्कृतं त्रिधा—श्रौतमार्षं लौकिकं च । श्रौतं द्विधा—मन्त्रं ब्राह्मणं च । आर्षं द्विधा—स्मृतिः पुराणं च । लौकिकं द्विधा—काव्यं शास्त्रं च । प्राकृतं त्रिधा–सहजम्, लक्षितं श्लिष्टं च । सहजं द्विधा–संस्कृतसमं देश्यं च । लक्षितं द्विधा–महाराष्ट्रं शौरसेनं च । श्लिष्टं द्विधा–पैशाचं मागधं च । अपभ्रंशश्च त्रिधा–उत्तमो मध्यमः कनिष्ठश्च । आवन्त्यालाटीयादिरुत्तमः । आभीरगूर्जरादिर्मध्यमः । काश्मीर-पौरस्त्यादिः कनिष्ठः ।

**शुद्धा साधारणी मिश्रा सङ्कीर्णानन्यगामिनी ।**
**अपभ्रष्टेति सा चे(यं) जातिः षोढा निगद्यते ॥२०६॥**

तासूत्तमपात्रप्रयोज्या संस्कृतजातिः शुद्धा यथा–

**"उन्नमितैकभ्रूलतम्"** (२९२) इत्यादि ।

मध्यमपात्रप्रयोज्या महाराष्ट्रप्राकृतजातिः शुद्धा यथा–

**"तुज्झ ण आणे हिअअं"** (२९३) इत्यादि ।

नातिमध्यमपात्रप्रयोज्या शौरसेनी शुद्धा यथा—**"तुंसि मए चूअङ्कुर"** (२९४) इत्यादि ।

नात्युत्तमपात्रप्रयोज्या पैशाची शुद्धा यथा—**"पणमथ पणअपकुपिता"** (२९५) इत्यादि ।

हीनपात्रप्रयोज्या मागधिका शुद्धा यथा—**"शदमाणुशमंशभाअण"** (२९६) इत्यादि ।

नातिहीनपात्रप्रयोज्या लाटीयापभ्रंशजातिः शुद्धा यथा—

**"दिविदग्गअकगुरुस्पयटिअदलिठलपटधिगरुअसणतरुतुण्णतसअलजलरासि-पवणविरिथरगरुधरहृहितितिढडिवाडिकडक्कमलकठिणुकसमसइसेसुलपलइसलक्क-जअचंदपआणउपप्परसिअअढपवं हवुविसड्ढिटिहृइहमाचलिमचलिममचल्लिअमहृइ-पलट्टिहिहइ ।"**

गूर्जरापभ्रंशजातिर्यथा—

**"सदसदखफणकनकतरलभनकततकरभटरकजततकरभटरकजततरलभनक"**

साधारण्यादयः पुनरनन्ताः । मध्यमपात्रभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृत-प्राकृतयोः साधारणी यथा—

सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥२९७॥

वक्तृविषयौचित्यादिप्रयोज्या मिश्रा यथा—

जयति जनताभिवाञ्छितफलप्रदः कल्पपादपो गिरिशः ।
जअइ अ तमल्लअंती गिरितणआ पणअकप्पलआ ॥२९८॥

दुर्विदग्धादिपात्रप्रयोज्या सङ्कीर्णा यथा—

अकटमकुटीचन्द्रज्योत्स्नाकलंकिअकोइलो
इ अलअ मुहुर्याम्यो वायुनिर्वारअवाइदा ।
अइ सखि वला रक्ताशोकस्तवापि मनोमुदे
नकजनकजं मानेनाद्य प्रियं प्रति जाहुदा ॥२९९॥

अहमयहुकुडे को अ संच खुचाग्गि इचटिमा
विश अलविलेशाशे आणी शशी णहला तवो ।
अडडिमलसीहुहणाएण साहु मुखा कति
भ्रमति न सामेवं चित्रं वचेहरत प्रियात् (?) ॥३००॥

विदग्धनागरकादिप्रयोज्या सङ्कीर्णा यथा—

कदा कटाक्ष एणाक्ष्या पूतुरे नूतनौ स्तनौ ।
वापुरेवापुर्विकान्तिररेरेरबलबिः (?) ॥३०१॥

यद् वा—

अररे कटाक्षलहरी वपुर्भुवस्थिनटनपाण्डित्य ।
अकटरदरहसितमस्यामुनिजनमप्याकुलीकुरुते (?) ॥३०२॥

क्रीडागोष्ठीविनोदार्थानन्यगामिसाधारणी यथा—

भीष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते ।
गोसे तिविञ्छिरिच्छोली तल्लत्रुहे विवल्लिदा ॥३०३॥

ग्राम्यपात्रप्रयोजितापभ्रष्टा यथा—

चन्द्रितो येन मामिरङ्गे स्त्रिन्दूरतिष्ठामृदयो यु पुण्णो ।
पुष्पोप्रगर्यो न च गम्यप्राणाः किं कुभिजन्मान्ध्रफलानुहोमि (?) ॥३०४॥

अनुकरणे साधुत्वमस्य, पात्रानु (सृ)तो रसः पोष्यते । पुरु(ष)पात्रेषु प्रायेण संस्कृतम्, सुखोच्चारत्वात्; स्त्रीपात्रेषु प्रायः प्राकृतम् । उक्तं हि—

अनल्पार्थः सुखोच्चारः शब्दः साहित्यजीवितम् ।
स च प्राकृतमेवेति मतं सूक्तानुवर्तिनाम् ॥

एवं कथयन्त्याचार्याः—

संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन।
अपभ्रंशेन केऽप्याहुर्यथामति यथारुचि॥

न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत्।
सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम्॥

देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः।
पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः।
शृण्वन्ति लटहं लाटाः प्राकृतं संस्कृतद्विषः॥

अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः।
केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः॥
काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः।
असंस्कृते च तुष्यन्ति कवयो गौडवासिनः॥ इति।

गौडाः संस्कृतप्रिया इति धनदत्तेनाप्युक्तम्—

ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया।
गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती॥
इति गौडा उपालब्धाः कथिताः संस्कृतप्रियाः।

अथौचित्यं जातेर्नियामकम्। उक्तं हि—

संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः।
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते॥

पैशाच्या शौरसेन्यान्यो मागध्यान्यो निगद्यते।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन॥

क्वचित् सा(मा)जिकौचित्यमपि उक्तं—

नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया।
कथां गोष्ठीषु कथयल्लोके बहुमतो भवेत्॥

यथामति यथाशक्ति यथौचित्यं यथारुचि।
कवेः पात्रस्य चेतस्याः प्रयोग उपपद्यते॥

**(श्ला)घ्यं वै कर्म काव्यस्य रीत्यादित्रय उच्यते।**
**वि(शि)ष्टे जातिरुच्येत ब्राह्मणत्वादिजातिवत्॥२०७॥**
**अलङ्कारितया केचिदाहुरेताः स्फुरद्भिदाः।**

प्रतीतोन्मेषविन्यासक्रमरूपाः प्रवृत्तयः ॥३०८॥
किमित्यलङ्कारतया नोच्यन्त इति चोच्यताम् ।
एताः स्युर्यद्य(था ?)लङ्कारो लोकेनायमलङ्कृति ? ॥३०९॥

पूर्वोक्तमर्थं प्रकटयति—

एवं व्यवस्थितैर्वाक्यैर्विभावादिसमर्पकैः ।
भवेच्चित्तविकासादि ततस्तत्तद्रसोद्भवः ॥३१०॥
पिष्टखण्डघृतादीनामग्निपाकेन मेलनात् ।
य(त्तद्व)त् स्वादरसोद्भूतिस्त(त्तद्व)त् काव्ये रसोदयः ॥३११॥
साहित्याभ्यासनिष्णातचेतसां स प्रकाशते ।
शास्त्राभ्याससहायानां रत्नतत्त्वमिव स्फुटम् ॥३१२॥

इति ।

अत्र किञ्चिद्विशेषमाह—

प्रकामं रञ्जयेच्चित्तमनेकरससङ्करः ।
यथा मदवि(ला ? लो)लानां कान्तानां किलकिञ्चितम् ॥३१३॥
संसर्गः सन्निपातश्चेत्येवं द्वैविध्यमाश्रितः ।
जायेत प्रथमो द्वाभ्यां द्वितीयो बहुभिर्भवेत् ॥३१४॥
अत्र मुख्यो भवेदेको रसो वाक्यार्थरूपतः ॥३१५॥

यथा विवाने द्वयोर्बहूनां वा सद्भावे एकस्यैवौल्बणम्, तथा काव्यवाक्येष्वपि कस्यचिदेव प्राधान्यम्; अन्यथा वाक्यभेदप्रसङ्गादिति निर्णयः ।

शृङ्गारवीरसंसर्गो यथा—

एक्कत्तो रुअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
णेहेण रणरसेण अ भडस्स डोलाइअं हिअअं ॥३०५॥

(अ)त्र भटस्येति समाख्यया शृङ्गारस्य प्राधान्यं सूचितम् ।

यद् वा—'कपोले जानक्या—" (३०६) इति वीरानुभावस्य सन्नाहरूपस्य जटाबन्धदृढीकरणस्याप्यत्राभिधानाद् वीरस्य प्राधान्यम् ।

अत्रैव शृङ्गारप्राधान्यं यथा—

अलअं जणंति दकहुकरथरस्तराहचसरासरीरजीवि ।
अंजणअआथण अप्पं सम अं अहकरलाविद्धा (?) ॥३०७॥

यद् वा—

पाणसमो त्ति भणंतो दअइतिलओ उदो मेग्ग इमाम्मि ।
हिअअप्पाणे तण्णं पमण्णइ अहं वि ए आरिसी तस्स ॥३०८॥

शृङ्गारकरुणयोः शृङ्गारप्राधान्यं यथा—

णिअए वि कुग्गअंणे दहपअणो राहचंचरत ।
गुजनि अजट्ठि अजणअ सुयामा पापसंगमसुहेति ॥३०९॥

शृङ्गारहास्ययोर्हास्यप्राधान्यं यथा—

धरणिए महाणसकम्मलग्गमसिमइल्लिएण हत्थेण ।
छित्तं मुहं हसिज्जइ चंदावट्ठं गअं वइणा ॥३१०॥

शृङ्गारप्राधान्यं यथा—

तिमिरनिरुद्ध-भीमरजनीमुखचन्द्रिकया
पशुपतिताण्डवाभिनयदर्शनदीपिकया ।
अभिभवसि त्वमपशशिनः श्रियमुज्ज्वलया
दशनमयूखमञ्जरितया हसितप्रभया ॥३११॥

शृङ्गाराद्भुतयोरद्भुतप्राधान्यं यथा—

कमलमनम्भसि कमले च कुवलयमेतानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥३१२॥

अत्र शृङ्गारप्राधान्यं यथा—

एकेनालिङ्गन्तं कृष्णं दोष्णा परेण धृतशैलम् ।
पश्यन्त्या राधाया विस्मयमाक्रम्य वर्तते मानः ॥३१३॥

शृङ्गाररौद्रयोः शृङ्गारप्राधान्यं यथा—

भयात् समालिङ्ग्य निमीलिताक्षीं प्रियं स्ववक्षःपुलकैरुदग्रैः ।
हरिः समाश्वासयदुग्रकर्मा हिरण्यसंहारविधौ नृसिंहः ॥३१४॥

रौद्रप्राधान्यं यथा—

प्रियां भयव्याकुलतारलोचनां विलोकयन् सस्पृहमात्तवेपथुः ।
पुरा हिरण्यासुरघातसम्भ्रमात्र च व्यरंसीन्नरकेसरी हरिः ॥३१५॥

शृङ्गारभयानकयोः शृङ्गारप्राधान्यं यथा—

कल्याणदायि भवतोऽस्तु कपालपाणेः
　　पाणिग्रहे भुजगकङ्कण(भू ? भी)षितायाः ।
सम्भ्रान्तदृष्टि सहसैव नमः शिवायै-
　　त्यर्धोक्तिलज्जि[1] ... मुखमम्बिकायाः ॥३१६॥

भयानकप्राधान्यं यथा—

अपेतव्याहारं धुतविविधशिल्पव्यतिकरं
　　करस्पर्शारम्भप्रगलितदुकूलान्तशयनम् ।
(ब ? मु)हुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेरितदृशो-
　　रहल्यासुत्राम्णोः क्षणिकमिह रम्यं रतमभूत् ॥३१७॥

शृङ्गारबीभत्सयोः शृङ्गारप्राधान्यं यथा—"अन्त्रैः कल्पितमङ्गल०"(३१८) इत्यादि ।

बीभत्सप्राधान्यं यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥३१९॥

अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्यादविद्यमाने(ना)पि शृङ्गारेण सङ्कीर्ण इव प्रतीयते ।

पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा
　　पार्श्वेषु प्रसभं प्रहृत्य नखरैर्दन्तैर्विलूयाधरम् ।
सुप्तानप्यवबोध्य युष्मदहितान् भूयोऽपि भुङ्क्ते वने
　　किं कान्ता सुरतैषिणी नहि नहि व्याघ्री करालानना ॥३२०॥

अत्र श्लेषसामर्थ्यादपारमार्थिकः शृङ्गारः पारमार्थिकेन बीभत्सरसेन संसृज्यते ।

शृङ्गारकरुणयोः करुणप्राधान्यं यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
　　गृह्णन् केशेष्वपास्तश्चरणनिगलितो[1] नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
　　कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ।३२१।

अत्र करुणरसः श्लेषोपमानसामर्थ्यादविद्यमाने(ना)पि विप्रलम्भशृङ्गारेण संसृज्यते ।

---

1. लज्जितमधोमुख—इति सन्दर्भोचितः पाठः ।
१. निपतितो—इत्यपि पाठः ।

यद् वा—

**राज्याद् भ्रंशो वने वासः सीता नष्टा हतो द्विजः ।**
**ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥३२२॥**

अत्र कतरः शृङ्गारः, विप्रलम्भः कतमः प्रवासः ? किमत्र सीता(या दे)शान्तरगमनं निर्णीतम् ? निरणायि हि रामेण जटायुनिवेदितवृत्तान्तेन । कस्तर्हि, तत्र यत्र देशान्तरलोकान्तरगमनयोः सकरं[1] (?) निश्चितम्, यथा मालतीमाधवे नवमेऽङ्के—'हा प्रिये ! क्वासि कथमविज्ञाततत्त्वमद्भुततमं च झटित्यपक्रान्तासि'[१] इत्यादि ।

यद् वा विक्रमोर्वशीये चतुर्थेऽङ्के—'कुतो नु खलु निर्जने वने प्रियाप्रवृत्ति[२]रागमितव्या' इत्यादि ।

पूर्वस्मिन्नुदाहरणे माल्या देशान्तरगमने क[2]....त्वमस्मिन्नपरस्मिन् वासन्तिकालताभावेन परिणताया उर्वश्याः प्रायो लोकान्तरगमनमेव । नायकस्य परमुभयोः सन्देह उच्यते, संशये करुणः, वल्लभस्य भृशं दुःखायमानत्वात् । सर्वत्रानर्थशङ्कीनि बन्धुहृदयानि भवन्ति । तत्र प्रदेशे लेशतो भवन् देशान्तरगमनसम्भावनाभासो नात्यन्तं कार्यकरः । अत एव हि तत्र तत्र मूर्च्छामूर्च्छादयः सहसा [3]शन्धमवधूय प्रभवति । प्रभावन्यासस्या[4] (?) लेशेन सम्भवात् तत्प्राप्त्युपायभूता गवेषणादयोऽप्युपपद्यन्ते । अपि च तत्त्वं यद्वा तद्वास्तु, बुद्धिरेव रसनिर्वाहिका, ते (हनि ? न हि ) सत्यममृतायामपि वासवदत्तायां वत्सराजस्य मृतेति बुद्धौ शृङ्गारः करुणः समपद्यत । तथाहि—'मृतेति प्रेत्य सङ्गन्तुम्' इत्यादि करुणानन्तरस्योदाहरणमजनि । एवं मदालसायामपि कुवलयाश्वस्य । तस्मान्माधवादिबुद्धेस्तत्तदेकान्तरूपप्राचुर्योपस्थापितमरणैककोट्यवलम्बनप्रवणानवधारणात्मिका बुद्धिरूहो वितर्कपर्यायः कदाचित् तत्त्वानुरूपादिति भवतीति कथं पुरस्तात् संशये करुण इत्यभाणि ? तन्न, अनवधारणत्वाद् विशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभव इति । एवमन्यत्रापि द्रष्टव्यम् ।

भयानककरुणाद्भुतरौद्रशृङ्गाररससन्निपातो यथा—

**राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे**
**दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।**
**आतङ्काद् विकलं द्रुतं करुणया विक्षोभितं विस्मयात**
**क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते[३] ॥३२३॥**

---

1. साङ्कर्यं—इति समीचीनम् ।
2. कथमविज्ञाततत्त्वम्—इति समीचीनम् ।
3. संज्ञामवधूय प्रभवन्ति—इति पाठ उचितः ।
4. न्यासस्य—इति स्यात् ।

१. झटिति पर्यवसितासि—इत्यपि पाठः ।
२. रवगमयितव्या—इत्यपि पाठः ।
३. वर्तताम्—इत्यपि पाठः ।

अत्र शृङ्गारस्य प्राधान्यम् ।

एवंमन्येषामपि सन्निपातो यथाप्रयोगं द्रष्टव्यः ।

रसाः स्युः सूक्तिवैचित्र्यादतिशायनशालिनः ।
ऋजूक्तिरथ वक्रोक्तिरिति द्वेधा हि सूक्तयः ॥३१६॥
रसोक्तिमपि केऽप्या(हु) रसस्यैवातिदीपनात् ।
यस्यां यादृगवस्थायां यद् रूपं यस्य वस्तुनः ॥३१७॥
तत् तथैवावयन्त्युक्तिः स्यादृज्वी ग्राम्यवर्जिता ।
एषैव जातिरुच्येत प्राज्ञैः साहित्यवेदिभिः ॥३१८॥

यथा—

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥३२४॥

यद् वा—

पादावष्टम्भ-नम्रीकृत-महिषतनोरुल्लसद्बाहुमूलं
शूलं प्रोल्लासयन्त्याः सललितवपुषो मध्यभागस्य चण्डयाः ।
विश्लिष्टस्पष्टवृष्टोन्नतविरलवलिव्यक्तगौरान्तराला-
स्तिस्रो वः पान्तु रेखाः क्रमवशविगलत्कञ्चुकप्रान्तमुक्ताः ॥३२५॥

अर्थव्यक्तेरियं भेदमियतैव प्रपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥३१९॥
प्रसिद्धा तत्र वक्रोक्तिः'''स्यादृजुविपर्ययात्[1] ।
अनयैव हि काव्यानि भिद्यन्ते काव्यवर्त्मनः ॥३२०॥
स्वभावोक्तिरपि प्रायः स्यात् समाधिमती यदि ।
वक्रामाहुरिमां केचिद् रसस्यैवामृता(प ? य)नम् ॥३२१॥

---

1. स्यादृजूक्तिर्विपर्ययात्—इति सन्दर्भानुसारी पाठः ।

यथा—

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामाबन्धः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव नहि रम्यं मृगदृशः ॥३२६॥

अलङ्कार्यतया येषां स्वभावोक्तिरलङ्कृतिः ।
[1]अलङ्कार्यतया तेषां किमन्यदवशिष्यते[2] ॥३२२॥

[3]कुतस्तद्रहितं स्याच्चेन्निरूपाख्यं प्रसज्यते ।
शरीरं चेदलङ्कारः किमलङ्कुरुते परम् ॥३२३॥

नात्मनैवात्मनः स्कन्धं क्वचिदप्यधिरोहति ।
भूषणत्वे स्वभावस्य विहिते भूषणान्तरे ॥३२४॥

भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा ।
स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्ततः ॥३२५॥

अलङ्कारान्तराणां च विषयो नावशिष्यते ।
अथातिशयसंसृष्टमीलिताङ्गावगर्भिणी ॥३२६॥

सूक्ष्मा भाविकसंश्लिष्टा समासोक्तिप्रकारिणी ।
समाधिगर्भा साक्षेपाप्रस्तुता सहभाषिणी ॥३२७॥

सं(श्लेषा ? लेशा)र्थान्तराश्लिष्टा गुर्वी लघ्वी समा पुनः ।
घटिता शृङ्खला सूच्या छायापद्धतिरेव च ॥३२८॥

प्रथन्ते कविवाक्येषु वक्रा विंशतिरुक्तयः ।
विवक्षया विशेषस्य लोकसीमातिवर्तिनी ॥३२९॥

---

1. इत आरभ्य—नावशिष्यते इत्यन्तं यावद् वक्रोक्तिजीवितोक्तकारिकाः । प्रथमोन्मेषः, ११-१५ काः ।

2. अतः परम्—'स्वभावव्यतिरेकेण वक्तुमेव न युज्यते' इति पठनीयम् ।

3. अत्र 'वस्तु तद्रहितं' इति पाठः समुपलभ्यते—वक्रो॰ जी॰, का॰ १।१२ ।

असावतिशयोक्तिः स्यादेषा वक्रोक्तिजीवितम् ।
सा च प्रायो गुणानां वा क्रियाणां वोपकल्प्यते ॥३३०॥
नहि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचित् ।

यथा—

विमलिअरसाअलेण विविसहरपइणा अदिट्ठमूलच्छेअं ।
अप्पत्ततुङ्गसिहरं तिभुवणहरणपरिवड्ढिएण वि हरिणा ॥३२७॥

यद् वा—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिका[1] ॥३२८॥

वस्त्वन्तरतिरस्कारो वस्तुना मीलितेष्यते ॥३३१॥

यथा—

एत्तो वि ण सच्चविओ (जगदे ? गोसे) पसरन्तपल्लवारुणराओ ।
म(ज्झे ? जणतंबेसु मओ तह मअतंबे)सु लोअणेसु अमरिसो ॥३२९॥

यद् वा—

पिअदंसणसुहरसमुउलिआइ जइ से ण होन्ति णअणाइं ।
ता केण कण्णलग्गं लक्खिज्जइ कुवलअं तिस्सा ॥३३०॥

(तत्तत्ता)त्पर्यभेदेन मीलितातिशयार्थयोः ।
तत्र तत्र प्रयोगेषु व्यक्तं भेदोऽवगम्यते ॥३३२॥
अभिप्रायानुकूल्यात् ( तु ) प्रवृत्तिगणनं हि यत् ।
साङ्गावगर्भितामेदो नापिकोक्तेः प्रवृत्तिः[2] (?) ॥३३३॥

यथा—

हत्थि पुहेण हि सुद्धं पिअसअपअणा पशुस्सओ ।
पेशुघ पेशुघरिणी सुअपडमुग्गिण्णदित्त दुअलं अव्वोरी (?) ॥३३१॥

यद् वा—

सालोअ च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।
णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स ॥३३२॥

1. मभिसारिकाः—इति साधुतरः पाठः ।
2. नापिकोक्तेः प्रवृत्तितः—इति शोभनः पाठः ।

सेनापाया निरुद्भेदा सोऽवमृस्मेति कथ्यते ।
इङ्गिताकारलक्षा स्यात् सा भ्रमिकान्तरम् (?)[1] ॥३३४॥

( पद्यु ? यथा —

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमा ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥३३३॥

पद्मसम्मीलनाच्चात्र दर्शितो निशि सङ्गमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥३३५॥
साभिप्रायोक्तिविन्यासः प्राज्ञैर्ज्ञेया सभाविका ।

यथा–

वृष्टि हे प्रतिवेशिनि क्षणमिहाप्यस्मिन् गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्ति जठरच्छेदा नलग्रन्थयः ॥३३४॥

यद् वा—

शुभे कोऽयं वृद्धो गृहपरिवृढः किं तव पिता
न मे भर्ता रात्रौ व्यपगतदृगन्धश्च बधिरः ।
हुं हुं हुं श्रान्तोऽहं शिशयिषुरिहैवापवरके
क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके ॥३३५॥

यद् वा—

व्याधाः पापप्रियस्तथापि भवते वीराय कस्तिष्ठते
किन्तु त्वामभिरूपमद्रिनिलयाः पश्यन्तु मां देवताः ।
याहि प्रातरतीत्य पाण्डुरजनीं गण्डीभटस्य स्वसा
स्वप्तुं वेश्मनि खड्गचर्मखचितां खट्वामियं दास्यति ।३३६।

यत्रोपमानादेवैतदुपमेयं प्रतीयते ॥३३६॥
अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः ।
[2]उपमेयस्यावचनादुपमाया विदुर्जिता (?) ॥३३७॥

1. इङ्गिताकारलक्ष्या स्यात् स्मृता भ्रमिकान्तरा—इति साधिष्ठः पाठः ।
2. उपमेयस्य न वचना—इति सङ्गच्छते ।

यथा—

नीलेन्दीवरमिन्दुकान्तिरमृतस्यन्दो नवः कन्दलः
कुन्दान्यस्फुटितानि मन्दपवनः कन्दर्पलीलाधनुः ।
प्रत्येकं हृदयङ्गमानि सकलान्येतानि तन्व्या मुखे
यस्मिन् सन्निहितानि तच्च वदनं किं वान्यदप्याननम् ॥३३७॥

यद् वा—

आम बहला वनाली मुहला जलरंकुणो जलं सिसिरं ।
अण्णाणईण वि रेवाए तह वि अण्णे गुणा के वि ॥३३८॥

**समाधिगम्यां तामाहुर्वस्तुनो नान्यथाकृतिः ।**

यथा—

चन्द्रज्योत्स्नाविशदपुलिने संकेतेऽस्मिन् सरय्वा
वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥३३९॥

यद् वा—

भानुमानपरदिग्वनितायाश्चुम्बतिस्म(भृश ? मुख)मुल्बणरागः ।
पद्मिनी किमु करोतु वराकी मीलिताम्बुरुहनेत्रपुटासीत् ॥३४०॥
सहकारयुवा समीपगां फलिनीं वेपितपल्लवाधराम् ।
कुपितामिव कोकिलास्वरैः सरसे सान्त्वयितुं प्रचक्रमे ॥३४१॥

**(सा)क्षेपा प्रतिषेधोक्तिर्येन केनापि वर्त्मना ॥३३८॥**

यथा—

कुतः कुवलयं कर्णे करोषि कलभाषिणि ।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥३४२॥

यद् वा—

'गच्छ गच्छसि चेत् कान्त' ॥३४३॥ इत्यादि ।

**अप्रस्तुतप्रशंसा स्यादन्त्ये तु व्यङ्ग्यया स्तुतिः ॥३३९॥**

यथा—

'शिखरिणि क्व नु नाम' ( ३४४ ) इत्यादि ।

**कर्त्रादीनां क्रियावेशः सहान्यैः सदृशेतरैः ।**
**सदृशैर्वा क्वचिद् यत्र सहोक्तिं तां प्रचक्षते ॥३४०॥**

यथा—

वर्धते सह पान्थानां मूर्छया चूतमञ्जरी।
वहन्ति स्म समं तेषामश्रुभिर्मलयानिलाः ॥ ३४५ ॥

यद् वा—

धीरेण समं जामा हिअएण समं अणिट्ठिआ उवए (सा)।
उच्छाहेण सहभुवा आहेण समं गलन्ति से उल्लावा ॥३४६॥

**दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः**
**सा लेशोक्तिस्तथा नान्या व्याजस्तुतिरपीष्यते ॥३४१॥**

अयैव गुणवान् राजा योऽग्यस्ते पतिरूर्जितः।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥३४७॥

प्रियोऽसि प्राज्ञोऽसि प्रभुरसि कुलीनोऽप्यसि युवा
युवत्यस्त्वामेवं कति न पतिमुर्वीश वृणते।
अतश्चैनां कीर्ति नलनहुषमान्धातृमहिषी
पराभ्रष्टुं वृद्धामधिगतनयो वार्हति भवान् ॥३४८॥

**जायेतार्थान्तरोक्तिः सा वस्तु प्रस्तुत्य किञ्चन।**
**तत्साधनसमर्थस्य न्यासो योग्यस्य वस्तुनः ॥३४२॥**

यथा—

जो जस्स हिअअदइओ दुःखं देन्तो विसो सुहं वेइ।
दइअणहदूणिआण वि वड्ढइ थणआण रोमञ्चो ॥३४९॥

यद् वा—

'ते विरला सप्पुरुसा' ( ३५० ) इत्यादि।

**यत् संक्षिप्ताभिधानं गुर्वी लघ्वी विपर्ययः।**
**समाभिधाना[1] स्यात् त्रिधा कविविवक्षया(?) ॥३४३॥**

वीप्सैकशेषसंज्ञासमासादिभिः संक्षिप्ताभिधानं यद्विपर्ययाद् विपर्ययः, गुर्वी

यथा—

1. समाभिधानं तच्च—इति सङ्कल्प्यते।

पश्यामि तां तत इतः परितश्च पश्चा-
दन्तर्बहिः पुरत एव च वर्तमानाम्।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीं
व्यासङ्गतिर्यगपवर्जितदृष्टि वक्त्रम् ॥३५१॥

लघ्वी यथा—
जिजीपुज्जएमिविसपुरललि एहि एप्प पत्री ससे तत्थ तुह।
पडिमा परिपाडि अवहलस ल ंदिसा अवकम् ॥३५२॥

एकशेषानेकशेषाभ्यामुभयोरप्येक उदाहरणं यथा—"अर्थवाचां रणमुपगतौ" (३५३) इति।

समा यथा—"केचिद् वस्तुनी" (३५४) इति विवक्षयैषा सम्पद्यते।

अर्थानां विप्रकीर्णानां [1]कविनैपुणकल्पिताद्।
घटनादेव कल्प्येत घटितोक्तिर्मनीषिभिः ॥३४४॥

यथा—
सच्चं बोलन्ति जणा मोणं संपत्थसाहणं तीति।
कल्लं मोणेण हि आ अज्जं देवत्तणं अप्पा ॥३५५॥

अ(स्य ? स्मिन्) वाक्ये पुरातनस्यान्यस्य वाक्यस्य घटना।

यद् वा—
"एक साधण अण्णहि नइपडमाह अमहि अत्थरिगत्थलि सरउ अग्गहि गट्ठुणनचिचत्तिलपलिमग्गसि कुमुत्थहि मुहपवक असरि अपासि असिसिरु (?)।

अत्रात्यन्तनक्तानां (? मृदूनामेकत्र घटना।

शृङ्खलोक्तिमिमामाहुरन्योन्यस्याभिधायिनीम्।
शब्दतश्चार्थतश्चेति द्विधा सा परिगीयते ॥३४५॥

यथा—
इमिणा सरएण ससी ससिणा विणिसा णिसाइ कुमुअवणं।
कुमुअवणेण अ पुलिणं पुलिणेण अ सोहए हंसउलं ॥३५६॥

यद् वा—
सङ्ग्रामाङ्कण[2]सङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च सप्ताब्धयः[१] ॥३५७॥

1. कविनैपुण्य—इति साधु सञ्चच्छते।
2. सङ्ग्रामाङ्गण—इति पाठ उचितः।
१. लोकत्रयम्—इत्यपि पाठः।

**काकुस्वर - पदच्छेद - भेदाभिनय - कान्तिभिः ।**
**सूच्यते यत्र चान्यार्थः सूच्योक्तिरिति सा स्मृता ॥३४६॥**

तत्र काक्वा यथा —

यदि मे वल्लभा दूती तदाहमपि वल्लभा ।
यदि तस्याः प्रिया वाचस्तन्ममापि प्रियप्रियाः ॥३५८॥

अत्रैकया काक्वा विधिः, अन्यया तु निषेधः प्रतीयते ।

स्वरेण यथा—

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद् भवन्ति दयिते सर्वा ममान्धा दिशः ॥३५९॥

अत्र 'दृष्टे' इत्यत्र प्लुतस्वरकरणात् कुपितकान्ताप्रसादनपरमपीदं वाक्यमुत्कुपितदृष्टिप्रसादपरतां प्रतिपद्यते ।

इत्यमुपरिष्टाद् द्रष्टव्यम् ।

**अन्योक्तीनामनुकृतिश्छायोक्तिरिति कथ्यते ।**
**लोकच्छेकोन्मकोन्मत्त-पोटामत्तोक्ति-भेदिनी ॥३४७॥**

यथा—

लोचने निमीलयित्वा' (३६०) इति ।

लोकोक्तिच्छाया यथा—

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥३६१॥

एवमन्यत्रापि द्रष्टव्यम् ।

**यस्यां संव्रियते चार्थः सा संवृतिरितीष्यते ।**
**एषा संवृतिसंयुक्ता वक्रोक्तिः स्मरते[1] मनः ॥३४८॥**
**यथा स्वच्छाम्बरच्छन्ना योषितां स्तनमण्डली ।**
**वृतेर्विवृतिरप्यर्थो धातोर्नैका तथा[2] बलात् ॥३४९॥**

---

1. वक्रोक्तिर्हरते मनः—इति सन्दर्भानुगतः पाठः ।
2. धातोर्नैकार्थताबलात्—इत्यर्थानुगतः पाठः ।

द्योतका ह्युपसर्गाः स्युरतस्तन्नातिसंवृतिः ।
ज्ञाये(त) संवृतोऽप्यर्थः काकुप्रकरणादिभिः ॥३५०॥

अनुक्तिसंवृतिः काचित् काचिदन्योक्तिसंवृतिः ।
(विरोधसंवृतिः) काचित् काचिद् व्याघातसंवृतिः ॥३५१॥

इति (षट्कारे ? षड्भिः प्रकारैस्तु) भूषिताका(१ऽव्य) पद्धतिः ॥३५२॥

असंवृतिर्यथा—

"त्वं जीवितम्" (३६२) इत्यादि ।

अन्योक्तिसंवृतिर्यथा—

सकुण्डलं सकवचं दीर्घबाहुं महाबलम् ।
कथमादित्यसङ्काशं मृगी व्याघ्रं प्रसूयते ॥३६३॥

विरोधसंवृतिर्यथा—

"मथ्नामि कौरवशतम्" (३६४) इति ।

व्याघातसंवृतिर्यथा—

अयं देशो देशो न न न नहि देशो वमयितुं
परं भूमिर्भूमिर्न न न नहि भूमिः प्रभवितुम् ।
अयं कालः कालो न न न नहि कालः कलयितुं
परं वेला वेला न न न नहि वेला जनयितुम् ॥३६५॥

अत्र गृहीतकपटोन्मादेन यौगन्धरायणेन वत्सराजाय विक्रमार्थोऽयं देशः काल इति च निवेद्यते। अत्र चतुर्भिर्नञ्भिर्विधिरेव गम्यते । व्याहताभसतानेन[2] वाक्येन व्याघातसंवृतिरियम् (?) ।

वक्रोक्तिसंवृतिर्यथा—

'मलयमरुतां व्राता याताः' (३६६) इत्यादि ।

अथ यद्य न स्याज्जानर्थपुमांसं प्रेयांसं परित्याजयति परित्याजयति तत्तदस्मिन् साक्षाद् गत्वमारोपयत मपि यो निवर्तयति स हि तं धनं जयतीत्यर्थः, यमर्थो य एव निवर्तनेत्यादिवक्रोक्त्या संवृतीयते चेति वक्रोक्तिसंवृतिरियम् (? ।

---

1. भूषिता काव्यपद्धतिः—इति सङ्कतः पाठः ।
2. व्याहताभासेनानेन—इति सङ्कच्छते ।

श्लेषोक्तिसंवृतिर्यथा—

उद्दामोत्कलिकां विपाण्डररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥३६७॥

अस्याः संवृता तात्पर्यसमासोक्तिर्भेदः।

**सविरोधा सोत्तरेति द्वयमन्ये प्रचक्षते।**
**विरोधस्तु पदार्थानां परस्परमसङ्गतिः ॥३५३॥**

यथा—

क्व युवतिमार्दवं क्व च महाहववारुणता
क्व च वलयी करः क्व करिदन्तुरमुष्टिरसिः।
क्व च नवयौवनं क्व कुसुमायुधनिःस्पृहता
तव ललनाविचेष्टितविरुद्धमहो चरितम् ॥३६८॥

[1]दिग्वासा यदि तत् किमस्य धनुषा सास्त्रस्य[2] किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं [3]परिद्वेष्टि किम्।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निव स्वामिनो[4]
भृङ्गी सान्द्रसिरावनद्ध[5] ( परुषं धत्तेऽ ) स्थिशेषं वपुः ॥३६९॥

**पदा(र्थ ? र्थानां) तु यः सारस्तदुत्तरमिहोच्यते ॥३५४॥**

यथा—

राज्ये सारं वसुधा [6]वसुन्धरायां पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥३७०॥

**अकर्तुः कर्तृतारोपादासोक्तिं प्रचक्षते।**
**सा विवक्षा विशेषस्य प्रायः कोपं विगाहते ॥३५५॥**

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि वदसि किं नाम कस्मात् सपत्न्याः।
मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीना-
मास्राम्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः ॥३७१॥

---

1. दिग्वासो; 2. शस्त्रञ्च; 3. ततो द्वेष्टि; 4. विरुद्धकर्मणि रतं पश्यन्निजस्वामिनं; 5. सान्द्रशिरावनद्धपरुषं—इत्यादि पाठान्तरमूह्यम्। 6. वसुधायां—इति साधु सङ्गच्छते।

यद् वा—

माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥३७२॥

( तद्व ? नन्व)त्र समाधिगर्भेति वक्रोक्तिः काचिदभ्यधायि।

तदुदाहरणम्—

"चन्द्रज्योत्स्नाविशदपुलिने" (३७३) इत्यादि।

इयं समाधिवर्त्मानुसारिण्युपमा भवितुमर्हति, नायिकानायकयोः परस्परयोः सादृश्यप्रत्ययात्, न; उपमावयवानां चतुर्णामुपमानोपमेयसाधारणधर्मसाम्यवाचिनामभावात्, किमेतत् ? द्विविधा ह्युपमा—पूर्णा लुप्ता च। पूर्वस्या एवायं नियमः। अपरस्या एकद्वित्रिलोपेऽपि भावात्।

एकलोपे यथा—'चन्द्रकान्तं मुखम्' 'चन्द्रसदृशं मुखम्' इति।

द्विलोपे यथा—'चन्द्रमुखी' इति।

अत्र समाससामर्थ्यावसेयौ साधारणधर्मसाम्यवाचिनौ।

त्रिलोपे यथा—'चन्द्रच्छायं मुखम्' इति।

अत्र चन्द्रच्छायेव छाया यस्येति विग्रहः। उपमेयसाधारणधर्मसाम्यवाचिनस्त्रयोऽपि समाससामर्थ्यावसेयाः। तस्मादियं त्रिलोपिन्युपमा भवितुमर्हति। न खलु लुप्तोपमायां न कदाचिदुपमानलोपो भवति, 'उपमानवर्ज्यं लोपः' इति स्मरणात्। अस्मिन् 'चन्द्रज्योत्स्ना' इत्युदाहरणे 'भवता' इत्युपमेयस्यैवोपपादनम्। ननु 'चन्द्रच्छायम्' इत्यत्रोपमेय(स्यै)कस्यैवावस्थानम्। चन्द्रच्छाया यस्येति विग्रहः चन्द्रस्य च कुत्रचिद् विच्छायत्वसम्भवात् चन्द्रशब्दश्चन्द्रगतमाह्लादकत्वं लक्षयति, पुनरपि मुखच्छायया[1] अयोगात् सादृश्यनिबन्धनैव चन्द्रशब्दस्य मुखच्छायाप्रवृत्तिरिति पुरस्तादेव चन्द्रशब्देनोपमानं प्रतीयते।

किञ्च, पूर्वमुपमानमभिमन्यमानो हि भगवान् कात्यायनः "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वोत्तरपदलोपश्च" इत्यवोचत्। अन्यथा "अनेकमन्यपदार्थे" (२.२.२४) इत्येव समासस्य प्रसिद्धत्वात्। एवं सति 'कुमुदगन्धिः' इत्यादिषु "उपमानाच्च" (५.४.१३७) इति इत्सिद्धिः। अत्र पक्षे 'उपमानानि सामान्यवचनैः' "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२. १. ५५. ५६) इत्यारम्भः सार्थकः स्यात्। अन्यथा "विशेषणं विशेष्येण बहुलम्" (२. १. ५७) इत्येव समाससिद्धेः। शस्त्रीश्यामादिशस्त्रपूर्वनिपातनियमार्थश्चेत्, स एव वक्तव्य इति समञ्जसम्। अपि च समास(न्धिषु ? सुब्धातु)-कृत्तद्धिता(सु ?)वसेयासु संक्षिप्तोपमासु द्वित्रिलोपी वाक्यवसेयाताम्[2] (?) पुनरेकलोपस्यैवेष्टत्वात्। 'चन्द्रज्योत्स्ना' इत्याद्युपमानवति चोपमानोपमेययोर्भेदप्रतिपत्तिपुरस्कारेण

1. छायाया—इति वाक्येऽवसीयेताम्।

भेदतिरोभावाभावाद् रूपकत्वं चास्या निरस्तम् । भेदे स्फुरत्युपमा, स्फुरितस्य भेदस्याप(न्न ? ह्नवे ) समासोक्तिरित्युक्तम् । एवं चेद् रूपकनिमित्तभूताया गौण्या वृत्तेर्भेदेन तद्भावापत्तिरिति वृत्तिः कल्पनीया समभ्युक्तिद्योतस्य भेदनारसन्धानवैधुर्येण¹ (?) गौण्यैव न परिणमत इति । न च तद्भावाध्यवसानमात्रेणातिशयोक्तिः, अतिशयास्पदयोः क्रियागुणयोः प्रत्ययात् । सादृश्यमतिशयास्पदं चेत्, अस्य कोऽतिशयः ? अथवा सादृश्यस्योभयाधिकरणत्वगतमतिशयितं विवक्ष्यते । उपमेयगतमेव विवक्षितमुपमानगतमर्थादापतितमिति चेत्, भावापत्तिकालोऽतिशयानुमीलनात् ।

अलङ्कारान्तराणामप्याहुरेकं परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥

इत्यर्थवादमात्रमेतत् । तर्हि अन्यथास्थितस्यान्यथा( कथना )दुत्प्रेक्षैषा न, अन्यथाप्रकारस्याकथनात् । **'एष वृक्षशिखरः'** इत्यादिषु हीयमानार्थानुयायी स गुणः । इयमुक्तिर्वाक्यार्थवर्तिनीति भेदः । अत एवास्याः समाभ्युक्तिरिति नाम । **'प्रतीच्छत्याशोकीम्'** इत्यादिवाक्यार्था अप्यवान्तराः **'इतीयं माधुर्यं स्पृशति च तनुत्वं च भजते'** इति परमवाक्यार्थप्राया, **'स्मितं किञ्चिद् वक्त्रे ललितमधुरो दृष्टिविभवः'** इत्यादिवत् । तस्मात् समाभ्युक्तौ समाधिरेको निर्वाह्यः, समाधौ न तथेति यावत् । उपमेयमात्रवाचिनी समाभ्युक्तिरुपमानमात्रवाचिन्याः समासोक्तेर्भिद्यत इति स्पष्टम् ।

अत्र केचिदनयोर्भेदमामनन्ति—यत्र प्राकरणिकेऽप्राकरणिको धर्मोऽध्यस्यते, सा समाभ्युक्तिः ।

दूरपडिवद्धराए अवऊहन्तंमि दिणअरे अवरदिसम् ।
असहन्तिव्व किलिम्मइ पिअअमपच्चक्खदूसणं दिणलच्छी ॥३७४॥

यत्र पुनरप्राकरणिके प्राकरणिकधर्मः, सा समासोक्तिः ।

यथा—

पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥३७५॥

उभयोरपि धर्मस्याध्यासः समान इति चेत्, न; समाभ्युक्तौ मानसोऽध्यासः प्रतीयते । यथा—

सुधाबद्ध - ग्रासैरुपवनचकोरैरनुसृता²
किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्रासादाग्रं³ प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥३७६॥

---

1. समासोक्तिद्योतनभेदानुसन्धानवैधुर्येण—इति साधु सङ्गच्छते ।
2. चकोरैः कवलिता;  3. उपप्राकाराग्रं—इति पाठान्तरमूह्यम् ।

इति प्रकटमुत्तरम् तत्र साधीयः । प्राकरणिकेऽप्राकरणिकाध्यासो नाम उपमेयामात्रवचनम्, उपमेयस्यैव प्राकरणिकत्वात् । अप्राकरणिके प्राकरणिकाध्यासोऽप्युपमानमात्रवचनम्, उपमानस्याप्राकरणिकत्वात् । मानसवाचिकभेदो न प्रयोजकः, धर्माध्यासस्य पुनरदृष्टत्वात् । तस्मादुक्तप्रकारा एव भेदाः । अत्रापरे—

प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥

इति लक्षयन्तः,

दन्तप्रभासुमनसं पाणिपल्लवशोभिनीम् ।
तन्वीं वनगतां नीलजटाषट्चरणावलीम् ॥ ३७७ ॥

इत्युदाहरन्ति ।

अत्र दन्तप्रभापाणिजटा नायिकाविशेषणभूता यथाक्रमं लतासुमनःपल्लवषट्चरणनिरूपणया तद्भावमापद्यन्ते । तनुत्वं नायिकालतयोः साधारणो धर्मः । वनशब्देन च श्लेषेण नायिकातपश्चर्याधारभूतमुदकं लताधारेण काननेन रूप्यते । अत्र प्रकृता नायिका । लतायाश्च समानानि विशेषणानि । तत्सामर्थ्येन च नायिकयोपमेयया लतोपमानत्वेनाक्षिप्यते । तेनेयं समासोक्तिरिति समाधिसमासोक्त्योरभेदं मन्यन्ते । अत एवैते समाधिगर्भां पृथङ् न लक्षयन्ति । सूक्ष्ममीक्षमाणा नैवमाचक्षते । तस्मात्—

श्रुतिमधुरया वाचा मुग्धाम्बुधिध्वनिघोरया
प्रणतपरिषच्चेतस्तापच्छिदामृदितं मुखम् ।
कनकनिकषस्निग्धच्छायं वहंस्तरसा श्रिया
[1]मरतकमणिश्यामः शार्ङ्गी नभस्युदजृम्भत ॥३७८॥

इत्यादि समाध्युक्तिरिति मन्तव्यम् ।

नन्वकर्तुः कर्तृतारोपाभासोक्तिरप्येषैव । यथा—'**माघमासे रटन्त्यापः**' (७९) इत्यादिसादृश्यवति समाध्युक्तिः । न तथाभासोक्तिः । माघमासेऽपां प्रकाशत्वमात्रे तद्वचनम् । अत्र का वृत्तिः ? तात्पर्यम् । तत् किं वृत्तित्रयाद्.....[2]? बाढम् । क्व वा गतं तत्? वाक्यं गतमेतत् । पदान्येव वाक्यमिति चेत्, सत्यम्, तथापि संसर्गप्रतिपादकः पदानां समूहो वाक्यमिति बलादभ्युपगन्तव्यम् । अत्र प्रशास्त्यन्यमुख्यं या प्रतिपाद्यं तत्रैतस्या अशक्तेस्तल्लक्षणागौणिभ्यामनुपपत्त[3]भावारसम्बन्धाश्च (?) । स्यादेतत् 'अपां पुनीमहे'

---

1. मरकत-इति सुष्ठु ।
2. भिन्नम्—इति स्यात् ।
3. गौणीभ्यामनुपपत्त्य—इति स्यात् ।

इति रटनानुपपत्तेरेव वक्त्रसम्बन्धं पलायितृत्वमात्रं लक्ष्यत इति। अत्र काममस्तु। 'कालिन्दि ब्रूहि कुम्भोद्भव' इत्यादिषु नैवं निर्वोढुं शक्यम्। किञ्च 'निश्शेषच्युत' इत्यादि।

शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं
क्वापि क्वापि (गु ? ग)णाः पठन्ति बहुशो नातिप्रसिद्धाक्षरम्।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते शिष्यते
नागै रागिषु रंस्यतेऽस्यति जगन्निर्वेक्ष्यति द्यामिति ॥३८०॥

मरतकतटे[1] मन्दाकिन्या मतङ्गजकामिनी
कनककमला(मोदं)वर्तैर्विनीतपरिश्र मैः ? मा ।
दयितवसतिं यान्ती मन्दायते मदिरेक्षणा
श्रवणसुभगं श्रुत्वा गीतं यशस्तव किन्नरैः ॥३८१॥

इत्यादिषु तात्पर्यादन्यदनुमन्तव्यम्।

पृच्छामः किमिव क्षमाभरमति द्वावेव तज्ज्ञौ तयो-
रेकः प्रस्फुरदाननद्युतिविषज्वालावली[2] ।
अन्योऽयं तव बाहुराहवजयश्रीसङ्गकेलिक्रिया-
दुष्प्रापावसरस्तृतीयमपरं नेवृक्षमीक्षामहे ॥३८२॥

वेवसि अणिमिसणअणो जप्पसि विणरअणदस्ससेपठिओ।
सुह अतुज्झवोसोहअं हिअअं निट्ठुरमज्झइर (?) ॥३८३॥

इत्यादिष्वपि वाक्यार्थस्याभिधीयमानत्वान्मुख्यार्थबाधतद्योगप्रयोजनाभावाद् वृत्तित्रयस्यासम्भवे व्यतिरिक्तमन्यदवश्यमभ्युपगन्तव्यमिति।

**भूषणायैव जायन्ते प्रायशश्छलजातयः।**
**कविभिर्निपुणैरुक्ता वक्रोक्तिविनिवेशिताः ॥३५६॥**
**ये गुणा येऽप्यलङ्काराः स्त्रीणां ते सौष्ठवान्वयात्।**
**श्लोकभङ्गिसमारूढाः श्लाघ्यैर्नागरिकैर्जनैः ॥३५७॥**

यथा—

अङ्गानि चन्दनरसैः परिधूसराणि
ताम्बूलरागसुभगोऽधरपल्लवश्च।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवस्तु शेषः ॥३८४॥

---

1. मरकततटे—इति सम्यक्।
2. वलीभासुरः—इति समीचीनः पाठः।

गुणालङ्कारवर्गस्य तद्वत् काव्यावलम्बिनः ।
वक्रोक्तिविनिवेशेन काचिज्जायेत रम्यता ॥३५८॥

उक्तं हि—

उपर्युपरि कव्युक्तिः कवेः स्फुरति यद्वशात् ।
भूषाः प्रयान्ति नवतां लता इव मधुश्रिया ॥ इति ।

वक्रोक्तयश्च तैः प्रायः शोभां [1]विभूतिभूयसा ततः ।
वक्रोक्त्यलङ्कारसंज्ञा विलम्बिन नियमः क्वचित् ॥३५९॥
यत्रेयं[2] केनालवस्याद् वक्रोक्तिश्चित्तहारिणी ।
तस्यानुगुणमात्रस्याद् व्यापारत्वं निरूप्यताम् (?)[3] ॥३६०॥

इति ।

वाक्यभेदो वाक्यशेषो वाक्यच्छित्तिरधिक्रिया ।
अध्याहृतिरपोद्धारस्तन्त्रावृत्त्येकशिष्टयः ॥३६१॥
ऊहो विपरिणामश्च लिङ्गोच्छेदश्च वाक्यगाः ।
अन्ये च तादृशा उक्तिवैचित्र्यपददायिनः ॥३६२॥
लोके वेदे च काव्ये च प्रसिद्धाः प्राज्ञसम्मताः ।
यथोचितं प्रयोगेषु स्थाप्यन्तामितनस्थितः (?)[4] ॥३६३॥

तत्रैकार्थपरस्य पदसमूहस्यावान्तरतात्पर्याद् वाक्यभेदः ।

पश्य पार्वति पयोदपङ्क्तिभिर्व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता नातिकिञ्चिदिव शेषवत्सरः ॥३८५॥

अत्र स्पष्टो[5] षष्ठो (?) वाक्यभेदस्य विवक्षितस्य काव्यस्य प्रकरणादिभिरवसितेऽभिप्रायान्तरेण वाक्यस्यापरिभूषणम् ।

---

1. विभ्रति भूयसीम् । वक्रोक्त्यलङ्कारसंज्ञामालम्बते क्वचित् ॥
2. यत्रेयं श्लेषगर्भा स्यात् ।
3. तस्यानुगुणमात्रत्वाद् व्यापारस्तन्निरूप्यताम् ।—इति सन्दर्भानुसारी पाठः ।
4. स्थाप्यन्तामिति नः स्थितिः—इति सम्यक् ।
5. स्पष्ट—इति समीचीनम् ।

वाक्यशेषो यथा—

वन्द्यः पितेव स भवान् नलकूबरस्य
रम्भा स्नुषा धनपतेरिव सा तवापि।
यत्त्वन्यदत्र हृदयान्न तदेति कण्ठं
दोषस्तथापि यदि तत् स्मृत एष रुद्रः ॥३८६॥

अ(यं ? त्र)स्नुषायामरमथाः, ततस्त्वत्तोऽपि क्व पापीयानिति वाक्यशेषः।
विवक्षितार्थस्य बाधे वाक्यान्तरेण वाक्यस्य भेदो वाक्यच्छित्तिः। यथा—

विद्युद् विद्युल्लता नेयं सा चेत् कथमचञ्चला।
कथं जलधराभावे कथं वा पृथिवीतले ॥३८७॥

यद् वा—

लक्ष्मणः—'शैलः सोऽयं ककुभसुरभिः' (३८८) इत्यादि।

अस्मिन् द्वितीयोदाहरणे पूर्ववाक्यस्य बाधनाभावाद् न वाक्यविच्छित्तिः। वाक्यसमाप्तिर्नाम धर्मान्तरमौपनिषदा (?)[1]।

पूर्वस्मिन् वाक्ये प्रस्तुतस्योत्तरत्राकर्षणमधिक्रिया। यथा—

कर्ता मखानां बहुदक्षिणानां भर्ता भुवः सागरमेखलायाः।
दयानिधिर्दानवतारके न ममार्ज दीनाश्रुजलानि वीरः ॥३८९॥

अत्र राम इत्यधिक्रियते।

वाक्यस्य न्यूनतायामाकाङ्क्षानिवृत्तये विशिष्टक्रियाकारकपदादेरुपादानमध्याहारः। ( यथा )—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥३९०॥

यद् वा—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥३९१॥

पदार्थसमवायार्थविशेषस्य सर्वनाम्ना पृथक् प्रत्यवमर्शा(न ? नात्) स्वशब्देनावस्थानमपोद्धारः। यथा—

'पत्युः शिरश्चन्द्रकलामनेन' (३९२) इत्यादि।

---

1. मौपनिषदाः—इति सङ्गतः पाठः।

अनेनेति रञ्जयित्वापदार्थेन समवायिनो रागस्य पृथक् प्रत्यवमर्शनम्।

यद् वा—

नालिकेरफलखण्डताण्डवक्षुण्णतत्कुहरवारिवीचयः।
यत्र यान्ति मरुतः स्मरास्त्रतां चूतपक्षकदलीसमृद्धयः॥३९३॥

यत्रैकमनेकसिद्धये प्रयुज्यते, तत् तन्त्रम्। यथा—

द्वारं खड्गिभिरावृतं बहिरपि प्रक्षिप्तगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः।
आक्रान्तं महिषीभिरेव शयनं त्वद्वैरिणां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः॥३९४॥

यत्र प्रतिवा(क्यमेव क ? क्यमेक)मावर्तते, सा आवृत्तिः। यथा—

सीता सौधतलं निरीक्ष्य हरते दृष्टिं झटित्याकुला-
मन्योन्या(सि ? पि)तचञ्चुदत्तकवलैः पारावतैर्दूयते।
इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं वाससः
(स्रष्टा ? प्रच्छा)द्याननमञ्चलेन च निशास्वस्तत्रपा रोदिति॥३९५॥

शास्त्रानुशिष्यते कुत्रैकस्योपयोग एव विशिष्टः। (?)[1]

क्वचिद् भस्मापाण्डु क्वचन कुचकाश्मीरकपिशं
क्वचिद् व्यालासङ्गि क्वचन मणिकाञ्चीपरिचितम्।
क्वचिद् व्याकीर्णास्थि क्वचन विलसद्रत्नवलयं
रहः साक्षि श्रेयो विशतु शिवयोः केलिशयनम्॥३९६॥

सम(र्था ? र्थ)द्वयार्थलिङ्गवृत्तिवचनान्तराणां विमृश्योपादान(स ? )मूहः। यथा—'चूडाचुम्बितकङ्कपत्रम्' (३९७) इत्यादि।

इत्युक्तमुत्तररामचरिते भवभूतिना लवमेकमुद्दिश्य ज( नं ? नकः )श्लोकमेनं पठितवान्। पश्चाद् महावीरचरिते 'धत्ते त्वचं रौरवम्' इत्यूहयित्वा ( लक्षणो ? रामलक्ष्मणौ ) द्वावुद्दिश्य तमेव श्लोकं कुशध्व(ज वि ? जोऽपि ) पठति।

अन्यथोपात्तस्यापुनरुच्चारितस्यैवार्थान्तरानुरोधात् लिङ्गवचनविभक्त्यादिभिरन्यथापि सम्बन्धो विपरिणामः। यथा—

तस्मिन् जीवति जीवामः पञ्चेषुः पञ्चमध्वनिः।
ते (च) चैत्रेषु प(कं ? वं)लातवकोलीकेलयोऽनिलाः॥३९८॥

---

1. शास्त्रानुशिष्योर्यत्रैकस्योपयोग एकशिष्टिः—इति समीचीनः पाठः।

शब्दान्तरोपलब्धवस्तुसामर्थ्यात् सामान्याक्षिप्तस्य विशेषेऽवस्थापनं लिङ्गोद्भेदः । य(द्वा ? था)—'कश्चित् कान्ताविरहगुरुणा' (३९९) इत्यादि ।

ननु कः पुनरध्याहारवाक्यशेषयोर्विशेषः ? शब्दाकाङ्क्षानिवर्तको वाक्यशेषः । तर्ह्यध्याहारसंवृत्योः किमन्तरम् ? तत्र संवृतौ [1]तात्पर्यमत्र ( नेतित्युत्तरवाक्यार्थरूप ··· नीकत्त्रयैव [2]पूर्ववाक्यार्थापस्थापनमिति भित्तिरपि स्पष्टो भेदः । अधिक्रियया, पूर्ववाक्यार्थ-प्रस्तुताकर्षणनियमः स्यात्[3] तत्रावृत्त्योरैक्यमिति ।

ननु नैकार्थशब्दसाध्यं ततम् तत्[4] तथावृत्तिरिति [5]निश्लेषं तत्र योर्नान्तरम्. तत्र द्वयोरपि कथं न विवक्षितम्[6] ? तथाहि—[7]द्वारं घटिभिरित्यनेन तथाविभवशालीक-रि[शालिभी र]क्षितं ? च तद्रिपुराजमन्दिरमेवमवस्थां ग[त]मितीह विवक्ष्यते । न तथा [8]तौ च दुर्जनवाणीत्यादिष्विति । यथा यत्रोदाहरणमेतत्—

प··· साग अण बसत्तरा अलोलो अण्णाणं ।
दअत्तवित्तसप्परिणह भूसण दिणव गुणदोवे ॥४००॥

इति ।

(नि,श्रि [9]खण्डिता नायिका प्रातरादित्यमुपतिष्ठमानाया वृक्षमागतं दयितं चोद्दिश्य तद्वचनम् ।

एकत्र तात्पर्यातिशयाद् न वाक्यभेदः । [10]दीपकावृत्योः का भिदास्य साम्यफलं दीपकं नेयमित्युक्तम् ? ) ।

आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः ।
अन्तर्गतोपमाधर्मा यत्र मद् दीपकं विदुः ॥

इति सर्वमनाकुलम् ।

---

1. तात्पर्यम् , अत्र न इत्युत्तरवाक्यार्थप्रत्यनीकतयैव—इति सम्यक् ।
2. पूर्ववाक्यार्थोप ···—इति स्यात् ।
3. स्यात् । तत्रावृत्त्योरैक्यमिति—इति साधीयान् पाठः ।
4. तन्त्रम् , न तु —इति सङ्गतः पाठः ।
5. श्लेषतन्त्रयो—इति साधु सङ्गच्छते ।
6. विवक्षितत्वम—इति समीचीनम् ।
7. द्वारं खड्गिभि—इति सन्दर्भोचितः पाठ ऊह्यः ।
द्र० अस्मिन्नेव प्रकरणे १३१ पृष्ठे ३९२ पूर्णोऽयं श्लोकः ।
8. नौश्च दुर्जनवाणी—इति शुद्धः पाठ ऊह्यः ।
द्र० अत्रैव ग्रन्थे पञ्चमप्रकरणे ४१ पृष्ठे १०३ पूर्णोऽयं श्लोकः ।
9. खण्डिताया नायिकाया—इति समीचीनः पाठः ।
१०. दीपकावृत्त्योः का भिदास्य ? साम्यफलं दीपकम्, नेयमित्युक्तम् ।—इत्येवं पठनीयम् ।

एतत् सर्वं सु(सपदां ? संपादं) कवेरुक्तिविशेष(त)ः ।
शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः ॥३६४॥
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये का(यं ? व्य)मेव तत् ॥३६५॥
अतः शब्दार्थयोर्यस्मिन्नापाद्य गुणतां कविः ।
उक्तेः प्राधान्यमादध्यात् काव्यस्योच्छ्वसितं हि तत् ॥३६६॥

इति ।

ध्वनिवर्णपदार्थेषु वाक्ये प्रकरणे तथा ।
प्रबन्धेऽप्याहुराचार्याः केचिद् वक्रत्वमाहितम् ॥३६७॥

ध्वनिवक्रता यथा—

तुह करकमलं कमलं चंदो चंदमुहि तुज्झ मुहचंदो ।
कमला उण कमलच्चिअ चंदो चंदोच्चिअ वराओ ॥४०१॥

इति ।

वर्णवक्रता यथा—

पतद्धाराः पारावतविरुद्धताततावाचालवलभि
कानिशशङ्कास्फुरितरमणीकण्ठमणिता (?)[1] ।
तटिल्लेखालोकक्षणगुणितदीपांशुकपिशै-
र्गवाक्षैर्लक्ष्यन्ते निशि ध(र ?)निकयूनामिह गृहाः ॥४०२॥
नवाम्बुदकुटुम्बिनः कटुकदम्बकादम्बरी-
मदान्धमधुपायिनो बहलयन्ति कौतूहलम् ।
विभृङ्खलशिखावलक्षुभितभूरिभूरीहृदा-
स्तदुन्मिष[2]समुन्मदनवल्लयो वासराः (?) ॥४०३॥

पदपूर्वार्धवक्रता यथा—

'रामोऽस्मि सर्वं सहे' (४०४)
'रामोऽसौ भुवनेषु विक्रमगुणैर्यातः प्रसिद्धिं पराम्' (४०५) इत्यादि ।

---

1. पतद्धाराः पारावतविरुतवाचालवलभि-
विटङ्का निःशङ्कस्फुरितरमणीकण्ठमणिताः । —इत्यर्थानुगतः पाठः ।
2. समुल्लसन्—इति सङ्गतः स्यात् ।

प्रत्ययवक्रता यथा—

'मैथिली तस्य दाराः' (४०६

'फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरा'. ४०७) इत्यादि।

वाक्यवक्रता यथा—

उपस्थितां पूर्वमपास्य लक्ष्मीम्' (४०८) इत्यादि।

यद् वा—

एकेनाभ्यधिके जयाम्यहमथान्यूने चतुष्कोऽश्मना
न्यूने वाभ्यधिकेऽपि वा तव जयो द्वाभ्यां गिरीन् नन्दति।
न न्यूनेऽधिके पुनः पण इति व्यामोह यथा छलं
[1]द्वावायामधिगन्तुमद्रितनया द्यूते हरः पातु वः (?) ॥४०९॥

प्रकरणवक्रत्वं यथा—रामायणे माणिक्यमृगानुसारिणो रामस्य करुणाक्रन्दकातरया जनकराजपुत्र्या तत्प्राणपरित्राणाय स्वजीवितपरिरक्षानिरपेक्षया लक्ष्मणो निर्भर्त्स्य प्रेषितः। तदेतदत्यन्तमनौचित्ययुक्तम्। यस्मादनुचरसन्निधाने प्रधानस्य तथाविधव्यापारकरणमसम्भावनीयम्। तस्य च सर्वातिशायिचरितयुक्तत्वेन वर्ण्यमानस्य (परित्रातृलक्ष्मणस्य सीतया [2]कथं?) तेन कनीयसा प्राणपरित्राणसम्भावनेत्येतदसमीचीनमिति पर्यालोच्य उदात्तराघवे कविना वैदग्ध्यवशेन मारीचमृगमारणाय प्रयातस्य परित्राणार्थं लक्ष्मणस्य सीतया करुणातुरया रामः प्रेरित इत्युपनिबद्धम्।

**एतान्युक्तप्रकारेषु सम्भवन्तीति बुध्यताम् ॥२६८॥**

तथाहि—ध्वनिवक्रत्वं नाम सूच्योक्तिप्रकारः। अन्यथा,

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहि।
एद्दहमेतावत्था एद्दहमेत्तेहि दिअहेहि ॥४१०॥

वइ विवरणिग्गअदलो एरंडो साहइ व्व तरुणाणं।
एत्थ घरे हलिअवहू एद्दहमेत्तत्थणी वसइ ॥४११॥

इत्याद्यर्थमभिनयवक्रत्वमपि पृथगङ्गीकरणीयं स्यात्। किञ्च, वक्रो(क्ति) कारेणैतन्नोद्दिष्टम्। तथाहि—

कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः॥

---

1. द्वावावामधि—इति समीचीनम्।
2. करुणाक्रन्दितेन—इति तु समीचीनः पाठः।

वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता ।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः ।

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति[१] ॥

जं वहजवरिअड्ढं मज्झसुओ एक्कवहूरविणिईओ ।
कलदूसणिए सावेऽवणाण तुहमत्थ ए (?) ॥४१२॥

पलमवाणिअ अह्न ताकत्तो अम्हाएऽव्वक्कत्तिओ ।
इअ विलुलिआइ अमुहव्वरम्मिव परिचट्टए सोहा (?) ॥४१३॥

इत्यादयः ।

''वक्रभावप्रकरणे प्रबन्धेऽप्यस्ति यादृशः[२]'' इत्येतावदेवोद्दिष्टम् । वर्णविन्यास-वक्रत्वसोमा सः[1] (?) एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धमिति व्याख्यातम् । अन्यान्यपि सूच्यसमाऽध्यारोपाभासच्छलजात्युक्तिषु द्रष्टव्यानि । प्रकरण-वक्रत्वसंविधानसूत्रताया नातिरिच्यते प्रबन्धवक्रत्वमपि । रीति····गतिवृत्त्यादिनिर्वहण-मेवेति मन्तव्यमिति ।

[2]····व्यतिरेकेण षट्त्रिंशल्लक्षणान्यपि ।
ऊर्ध्वरेखादिवत् काव्ये केचिदाचक्षते बुधाः ॥३६९॥
अन्तर्भवन्ति तेष्वेव तानि किं शब्दविस्तरैः ॥३७०॥

तथाहि—

विभूषणं चाक्षरसङ्गतिश्च शोभाभिमानौ गुणकीर्तनं च ।
प्रोत्साहनोदाहरणे (हियु ?)निरुक्तं गुणानुवादोऽतिशय(स्य?श्च) हेतुः॥ ३७१।

सारूप्य (सिद्धय ? मिथ्या)व्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
(आख्यान)याच्ञाप्रतिषेधपृच्छा (दृष्टा)न्तनिर्भासनसंशयाश्च॥३७२॥
आशीः प्रियोक्तिः कपटं क्षमा वा प्राप्तिश्च पश्चात्तपनं तथैव ।
तथानुवृत्तिर्ह्युपपत्तियुक्ती कार्यानुनीतिः परिदेवनं च ॥३७३॥

---

1. द्र० 'अत्र वर्णविन्यासवक्रतामात्रनिहितः शब्दशोभातिशयः सुतरां समुन्मीलितः । एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धम्'' इति व्याख्यातम् । वक्रो० जी०, प्र० उ०, का० १६, २०४१ वृत्तिः ।

2. वक्रोक्तेर्व्यतिरेकेण—इति सङ्कृतः पाठः ।

१. वक्रो० जी० १८–२० का० । २. वक्रो० जी० ३/१ का० ।

षट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसम्मितानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥३७४॥
अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् ॥३७५॥

'लीनेव प्रतिबिम्बिता' (४१४ इत्यादि ।

अत्रोत्प्रेक्षापरम्परैव हीयं [1]सातिशयकामामवे ( द्वेकयति स्थाने निवेशनं चैतद्-भेदकं संविधानौचित्यशालिनि कविव्यापारे पतति । स एव चेल्लक्षणं काव्यशरीरं भवति ? ) तदेव चेल्लक्ष्यलक्षणयोर्द्वैतापत्तिः । तच्छोभाकरणं चेदुक्तं मार्गानुप्रवेशः ।

तत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥३७६॥

यथा—

'अङ्के न्यस्योत्तमाङ्गं प्लवगकुलपतेः' (४१५) इत्यादि ।

सिद्धैरर्थैः समं कृत्वा(ह्यर्थे ?) ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र (वि ? )श्लिष्टविचित्रार्था सा शोभेत्यभिधीयते ॥३७७॥

यथा—

'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते '''''''''' ॥४१६॥

इत्यादि लक्षणोदाहरणान्तर्भावाद् द्रष्टव्याः । अत्र दिङ्मात्रं ( प्रपञ्चितं ? ) दर्शितम् । विस्तरभयान्न प्रपञ्चितम् ।

॥ इति षष्ठं प्रकरणम् ॥

---

1. सातिशयिकां शोभामाश्रयते इयेकयतिस्थाने—इति समीचीनः पाठः ।

## अथ सप्तमं प्रकरणम्

अथ परिष्कृतिनिरूपणम्—

श्रुताभियोगप्रतिभाशक्तियुक्तः कविः स्मृतः ।

इति ।

उक्तं हि—

नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥

इति ।

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥

इति च ।

अपि च

श्रमो नियोगक्लेशौ च प्रतिभेति चतुष्टयी ॥३७८॥
कैश्चित् कविभिराख्याता कवितायाः परिष्क्रिया ।
श्रमः स(ब)कलावीक्षा नियोगस्तस्य शीलनम् ॥३७९॥
स क्लेशः करणोद्योगः प्रतिभा भास्वती मतिः ।
प्रज्ञा नवनवोन्मेषशालिनी प्रतिभेति वा ॥३८०॥
एवंविधपरीवारः कविः कुर्वन् निगुम्फनम् ।
वाक्यकार्मणसम्पत्त्या रसाब्धौ मज्जयेज्जगत् ॥३८१॥
नवोऽर्थः सूक्तिरग्राम्या श्राव्यो बन्धः स्फुटा श्रुतिः ।
अलौकिका(था ? र्थयु)क्तिश्च रसमाहर्तुमीशते ॥३८२॥
वाक्यसंवननाधानं कवेरेष महान् भरः ।
तच्च संवननं प्राज्ञैर्वाक्यार्थादिभिरुद्भवेत् ॥३८३॥
भूतपूर्वस्य मन्त्रस्य दर्शनाद् ऋषयो यथा ।
नवगुम्फार्थयोस्तद्वद् दर्शनात् कवयोऽभवन् ॥३८४॥

आर्षं शब्दाद्भुतं यच्चदृष्टसुखसाधनम् ।
कवेः सातिशयो गुम्फः सद्यो निर्वृतिमावहेत् ॥३८५॥
अस्मिन्नपारे संसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥३८६॥

इति ।

एवं स्वरूपमुक्त्वा तद्भेदलक्षणमाह, पूर्वमेवं भेदोद्देशः कृतः—

गुणप्रधानां यो रीतिं वैदर्भीं प्रतिपद्यते ।
[1]विपश्चीरवसौभाग्यां सत्कविः प्रथमः स्मृतः ॥३८७॥

यथा वाल्मीकिकालिदासादयः ।

यो वक्रोक्तिप्रधानः स्यात् स विदग्ध इतीष्यते[१] ।

यथा व्यासबाणादयः ।

अर्थालङ्कारनिर्बन्धी[२] ज्ञेयः कविररोचकी ॥३८८॥

यथा माघभारव्यादयः ।

यः श्लेषचित्रयमकनिर्बन्धस्तोमभूयसीम् ।
गौडीं च श्लाघते स स्यात् सतृणाभ्यवहारकः ॥३८९॥

यथा शिवभद्रादयः ।

यथाक्रमं सत्कविविदग्धारोचकिसतृणाभ्यवहारिणामुत्तय उदाह्रियन्ते—

स्फुरति बहुशो बाहुः सव्येतरः सरतालकं[2]
तरलनयनं [3]धौराधौतालिकन्दलितं मुखम् (?) ।
अलसललितैरङ्गैरालिङ्गितुं किमुपैति सा
मदनविवशा वर्षारात्री मतङ्गजगामिनी ॥४१७॥

---

1. विपञ्चीरव—इति भाव्यम् ।
2. सुरतालसं—इति समीचीनं सङ्गच्छते ।
3. धाराधौता—इति युक्तः पाठः ।
१. स कविः—इति ख० पु० पाठः ।
२. तीर्यते—इति ख० पु० पाठः ।
३. निष्ठो यो—इति ख० पु० पाठः ।

प्रबुध्यते नूपुरशिञ्जितैः पुरं
विशृङ्खलं क्रोशति मेखला खला।
तवाभिसार-व्रत-वेष-धारणे
स विस्मृतश्चण्डि कथं नु डिण्डिमः ॥४१८॥

यथाः स एष सखि सङ्कुलमेघनाद-
निर्यन्त्र-गुप्त-मणिनूपुर-काञ्चि-घोषः ।
वर्षानिशासु दयितस्य गृहं व्रजन्त्या
लाक्षायितं चरणयोर्मम यत्र पङ्कैः ॥४१९॥

गजकदम्बकमेच(क)मुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे।
अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥४२०॥

इति।

**समयो नातिलङ्घ्यः स्यात् कविभिः सकलैरपि।**

समयस्य भिदाः प्रकटयति—

**सतोऽप्युपेक्षणं ज्ञेयमसतश्च परिग्रहः ॥३९०॥**
**बाहुल्यान्नियमः क्वापि सतश्चैवोपवर्णनम्।**
**चतुर्धा समयो वाच्यः**

इति।

सतोऽप्युपेक्षा—

**यथाशोकतरोः फलम् ॥३९१॥**

इति।

रमणी(य ?)चरणाम्भोजस्पर्शसम्भावितात्मनः ।
अ(न्योन्य ? नेन)किमशोकस्य फलेन सुमनोजुषः ॥४२१॥

**फलपुष्पे चन्दनस्य**

यथा—

[1]..................कादाचित्कैः परे फलैः ।
पादपा नोपकुर्वन्ति स्वेन नित्यमचन्दनाः ॥४२२॥

1. नित्यमेवोपकुर्वन्ति—इति सङ्गच्छते।

सेवन्ति तीरवड्ढं अकुसुमभरो अत्तचन्दणलआ।
लिद्धो मत्तणवं पवहे वणगिरिदाणलप्पवहो (?)[1] ॥४२३॥

इत्यादि चिन्तनीयम्।

त्याज्यम्—

**नालिकेरस्य फुल्लकम्।**

यथा—

मधुमन्ति सुगन्धीनि न सन्ति कुसुमानि चेत्।
अलीनां नालिकेरस्य किं फलं कठिनैः फलैः ॥४२४॥

[१]असतः परिग्रहस्था(ना)नि—

**समुद्रे पङ्कजं वर्ण्यं**

यथा—'संखकुलमि' त्ति स (?) ॥४२५॥

**हंसाः सर्वसरःस्वपि ॥३६२॥**

यथा—'सहंसलेखानि सरस्तटानि' ॥४२६॥

सर्वसरःस्वपीत्युपलक्षणम्, तेन सरितोऽपि ग्राह्याः। यथा—

सुनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ॥४२७॥

इति।

परिसरपुलिनेषु निम्नगानां सपदि समागतराजहंसयूथाः ॥४२८॥

इति च।

**गिरिषु स्वर्णरत्नानि**

यथा रैवतकवर्णने—

क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम् ॥४२९॥

इत्यादि।

**ज्योत्स्नापानं चकोरकैः।**

---

1. सेवन्ति तीरवड्डअ-णिअअ-भरोवत्त-चन्दण-लआलिद्धे।
रममत्तण-दृप्प-वहे वण-गअ-दाण - कडुए-गिरि-णइप्पवहे॥
—इति साधुतरः पाठ ऊह्यः।

१. असत्परिग्रहः—इति ख० पु० पाठः।

यथा—

वितत्तदलभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः।
मदचपल-चकोरचञ्चुकोटीकबलनतुच्छमिवान्तरान्तराभूत् ॥४३०॥

**यशोहासगतं शौक्ल्यं**

यथा—

यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनो-
रसज्ञापाण्डित्यच्छिदुरशशि-धामभ्रमकरान् ॥४३१॥

इति।

जस्सविलक्खं तिणहं पुणपडिसद्दानि सामुहपलिक्खलिआ-
जोह्नाकल्लोला विअ ससिधवलासु रअणीसु हसिहच्छेआ ॥४३२॥

**कार्ष्ण्यं चेतरपापयोः ॥३९३॥**

यथा—'अयशोमलिनं मुखम्' इति।

यथा शबरसैन्यवर्णने—

'अशुभकर्मसमूहमिवैकत्र समागतम्' इति।

**प्रतापस्य[1] च तीव्रत्वं स्वादुत्वं वचसामपि।**
**स्वभावस्य च सौरभ्यं**

इति।

यथा—

तीव्रः प्रतापो मधुरं वचस्ते यशोऽवदातं सुरभिः स्वभावः ॥४३३॥

इति।

**लौहित्यं रागकोपयोः ॥३९४॥**

यथा—

गुणानुरागमिश्रेण यशसा [1]तव सर्पता।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥४३४॥

सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीडया।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥४३५॥

---

1. तें प्रसर्पता—एषोऽपि पाठः।
१. प्रतापेऽरुण०—इति ख० पु० पाठः।

प्रतापस्यापि लौहित्यं वक्तव्यम् ।

**नीलश्यामलकृष्णानामैक्यं ज्ञेयं प्रयोगतः ।**

यथा –"हलधरपरिधानश्यामलैरम्बुवाहैः" (४३६) इति ।
"सान्द्राः श्यामरुचः पयोदाः" (४३७) इति ।

नियमस्थानानि–

**नियम्यं जातिपुष्पस्य वर्षास्वेवोपवर्णनम् ॥३९५॥**

यथा—

स्निग्धैर्मयूरवर्णैरुच्छ्वसिताभिश्च जातिशाखाभिः ।
शीतैः पुरो मरुद्भिर्वर्षारम्भस्य सूचिता लक्ष्मीः ॥४३८॥

**कौमुदी शुक्लपक्षेषु**

यथा—"बहुलपक्ष इव राजशून्यः" इति ।

**वसन्ते कोकिलध्वनिः ।**

यथा—

अप्रगल्भकलकण्ठपञ्चमाः किञ्चिदुच्छ्वसितचूतशाखिनः ।
जातिमात्रमलयाद्रिवायवः केऽपि चैत्रदिवसाः समाययुः ॥४३९॥

... ... ... ... **मलये चन्दनद्रुमः ॥३९६॥**

मलयजा इति चन्दनस्यैव नाम ।

**सदृशेन पदार्थेन तत्का(र्योपादा ? र्यस्योपपाद)नम् ।**

यथा—

अविरतरतक्लान्ता कान्ता कदाचन काचन
क्वचन तिमिरावासे वासो विहाय सुखस्थिता ।
[1]तदनुभवतः कीर्णं धूर्ते प्रवर्तयति क्षणात्
तरलतरयत्येकं पाणिं करोत्य(प)रं वपुः (?) ॥४४०॥

**इत्याद्युन्नेयमन्यत्र प्रसिद्धं सन्निबन्धनम् ॥३९७॥**

**अन्ये सामयिका धर्मा ज्ञेयाः शब्दनिबन्धने ।**
**पदार्थावृत्तयः सद्या वृत्तिच्छादनतः क्वचित् ॥३९८॥**

---

1. तदनु भवतः कीर्ति–इति सङ्गतः पाठः ।

यथा—

एताः कूलकरञ्जकुञ्जकुहरव्यासक्तकालोरग-
प्रस्तानेककपोतचीत्कृतरवोच्चण्डास्तटीभूमयः ॥४४१॥

अत्र कूलपदार्थस्य कूलतटीशब्दाभ्यामावृत्तिः ।

यद् वा—

मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां सरोजसन्तानमिवाकरोदपाम् ॥४४२॥

इति ।

अत्र पद्मपदार्थस्य पद्मशब्दाभ्यां सरोजशब्देन चावृत्तिः ।

क्वचिद् रसातिशयादिष्ववृत्तिच्छादनेऽपि—

कङ्कालिन्याः पृथुकुचतटे वक्षसोत्पीडये(हं ? यं)
प्रेमस्विन्नं प्रचलनयनं वक्त्रमालोकयेयम् ।
लीलालोलां प्रणयमधुरां वाचमाकर्णयेयं
वाचं रुन्धन् वदनकमले वक्त्रमावर्जयेयम् ॥४४३॥

अन्यच्च—

**अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते ।**
**न दोषः पुनरुक्ते(ति ? पि) प्रत्युतेयमलङ्क्रिया ॥२९९॥**

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥४४४॥

यद् वा—

किमुवाच वचो रामः किमुवाच च लक्ष्मणः ।
सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥४४५॥

**सहन्ते परमावृत्तिं लाटानुप्रासरागिणः ।**

अनेन सागरानूपान् सागरानूपजान् द्रुमान् ॥४४६॥
सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ।
गिरीन् गिरिप्रस्रवणान् प्रवाहान् गिरिकाननान् ॥४४७॥

इति ।

गिरिप्रसक्तानि गिरींश्च पश्यन् गिरीन् गिरीशप्रतिमो जगाम ॥४४८॥

इत्यादयो निर्वाह्याः ।

कदाचिदपि [1]नेष्यति सिद्धिरद्धान्तगोचराः (?) ॥४००॥

यथा—

'सौन्दर्यविभ्रमभुवो भुवनाधिपत्य' (४४९) इत्यादि।

पादान्ते न क्वचित् सन्धिर्वाक्यं दृष्टेर्विलम्बनात्।

तडिल्लता किं न स्थैर्याद् वल्ली किन्तु हिरण्मयी।
सौकुमार्यात् पुनर्नैषा आ ज्ञातं कापि कामिनी ॥४५०॥

लघोर्गुरुत्वं पादान्ते न सर्वत्रेष्यते बुधैः ॥४०१॥

अत इन्द्रमालावसन्ततिलकयोर्लघोर्गुरुत्वं न द्रष्टव्यम्। यथा—

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ॥४५१॥

इति।

'अम्बास्तवेषु तव तावदकर्तृकाणि' (४५२) इत्यादि।

शार्दूलविक्रीडितेऽपि क्वचित्। यथा—

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणम्
आ[2] ज्ञातं स जटायुरेव[3] जरसा क्लिष्टो वधं वाञ्छति ॥४५३॥

इत्यादि निर्वाह्यम्।

गुरोरपि लघुत्वं च पादान्ते क्वचिदिष्यते।

यथा—

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दर ग्राम्यजनो मृष्टमश्नाति ॥४५६॥

वृत्तगन्धिषु गद्येषु [4]ख्यातं वृत्तं सपूरणे (?) ॥४०२॥

दोष इत्यर्थः। यथा—'[5]सुरभटनिनदर्भरिता' इति।

पादस्यादौ न खलुनवतहन्तादयः स्मृताः।
विधि(ध्यर्थ)विवक्षायां तेऽपि सह्याः क्वचित् क्वचित् ॥४०३॥

---

1. नेष्यन्ति सिद्धिराद्धान्त—इति युक्तः पाठः।
2. आः—इत्येवं पाठः।
3. रेव—इत्यमपि पाठः।
4. ख्यातवृत्तांशपूरणे—इति युक्तः पाठः।
5. सुरभट—इति स्यात्।

यथा—'खलूकृत्वा खलचेष्टितम्' (४५५) इत्यादि।

**एकशिष्टपदं वाक्यं वृत्ता(र्थे ? र्घे) न प्रयुज्यते।**

यथा—

**जयन्ति ताण्डवे शम्भोर्भङ्गुराङ्गुलिकोटयः।**
**[1]कृष्णस्य च कराश्चक्रांशुकपिशत्विषः (?) ॥४५६॥**

अनेन विशिष्टं पदं प्रयोज्यमिति गम्यते।

**अर्धपादेऽन्तयोर्नित्यं :समासकृतपूरणम् ॥४०४॥**

अनेन समासस्यैकपद्यमैकस्वर्यं चैकविभक्तित्वं चेति प्रयोजनमिति समस्तानामैकपद्येऽपि प्रथमतृतीयपादयोरन्ते समासस्यापरिपूरणं सह्यमित्युक्तं भवति।

यथा व्यलगनम्—

**विशङ्कट-कुटीरकस्थली-मुखरस्खलत्स्खलितमेखलाकुलाः।**
**भवनानि तुङ्गतपनीयसङ्क्रमक्रमणक्वणन्मुखरनूपुराः स्त्रियः ॥४५७॥**

हस्तिमल्लप्रबन्धादिषु पादान्ते पदापूरणं विपुला(षा ? र्या)लक्षणानुसारेण। यथा—

**अणिअवनुए उण पिए मुद्धा खु त्ति जेणदाणिए मेहे।**
**सिविणअदस्सणदातस्स कदे सोअस्समुव्वहसि ॥४५८॥**

यद् वा—

**"हुं तवखो राआहुं तव्वोराणअत्ति जंपेइ" ॥४५९॥**

इत्यादि।

अर्धान्ते समासापूरणं यथा—

**किन्न बहुझल्लरीभेरीडिण्डिमपडवजअघण्टा।**
**भंभा(मंदम)मद्दलकाहलहुडुक्कडक्काविरावेण ॥४६०॥**

यद् वा—

**एलालवङ्गलवलीखरवुसकच्छोरवालकङ्कोली।**
**कुङ्कुमकुसुम्भकन्दलकुरण्ड[1]···· सम्बन्धम् ॥४६१॥**

यद् वा—

**अरविन्दकरण्डालयगृहोदरोदारवाससङ्गमहा।**
**कालहाडम्बरडोभारिलिवरवतुमिअं (?) ॥४६२॥**

---

1. कराः कृष्णस्य च भुजाश्चक्रांशु—इति समीचीनः पाठ ऊह्यः।

1. कुरण्डवकुलालिसम्बन्धम्—इति शोभनः पाठः।

उक्तं च—

यतिः सर्वत्र पादान्ते व्यक्ताव्यक्तविभक्तिके। इति।

**क्वचित् पदस्य मध्येऽपि सर्वत्रादौ यतिर्भवेत्।**
**यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥४०५॥**

यथा—

पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ ॥४६३॥

इति।

अत्र प्रत्युदाहरणं यथा—

"एकस्या गण्डतलमलं गाहते चन्द्रकक्ष्याम्" (४६४) इति।

**पूर्वं तावत् स्वरः सन्धौ क्वचिदेव परादिवत्।**

यथा—"जम्भारातीभकुम्भोद्भवमिव दधते" (४६५) इति।

क्वचित् परादिवद् यथा—

"स्कन्धे विन्ध्याद्रिबुद्धया निकषति महिषस्याहितोऽसूनहार्षीत्" (४६६)

अज्ञानादेव यथा—

'पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रताम्" (४६७) इति।

अस्य हि स्वरस्य पदादिवद् भवत्येतत् प्रायेण विभक्तिसन्धौ द्रष्टव्यम्।

अत्रापि पूर्वापरभागयोरेकवर्णत्वं दुष्यति।

"तस्या वक्त्राब्जमपजितपूर्णेन्दुशोभाविलासम्" (४६८) इति।

**सर्वत्र यतिचिन्तायां यणादेशः परादिवत् ॥४०६॥**

यथा—"स पल्वलोत्तीर्णवराहयूथानि" (४६९) इत्यादि।

**नित्यं प्राक्पदसम्बन्धाश्चादयश्च पदान्तवत्।**

इति।

अपूर्वं यदि न का(व्य ? र्यं )मित्यर्थः।

यथा—

स्वादुस्वच्छन्द··· सलिलमिदं प्रीतये कस्य न स्यात् ॥४७०॥

इति।

अन्येषां पूर्वपदान्तवद्भावो मा भूत्। यथा—

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥४७१॥

इति।

परेण नित्यं सम्बद्धाः प्रादयश्च परादिवत् ।।४०७।।

यथा--

दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः' ।।४७२।।

इति ।

इदं चादीनां प्रादीनामेकाक्षरत्वे कार्यम् । अनेकाक्षरत्वे च चामीकरादिवत् ।

यथा—

'प्रत्यादेशाऽपि¹ च मधुनो विस्मृतभ्रूविलासम्" ।।४७३।।

यथा—

"दूरारूढप्रमोदं हसितमिव परिस्पष्टमासीत् सखीभिः" ।।४७४।।

पृथ्वीवृत्ते यतेर्भङ्गः कैश्चित् प्रायेण सह्यते ।
यथाशोभं यतिः कार्येत्याहुः काव्यविदो यतः ।।४०८।।

यथा—

लभेत सिकतासु तैलमपि यत्नतः पीडयन् ।।४७५।।

इत्यादि ।

न कर्मधारयः कार्यो बहुव्रीहिप्रतीतिदः ।
(य ? त)था विपर्ययस्त्याज्य इति सर्वत्रसम्मतम् ।।४०९।।

यथा—

येनाकुम्भसीमग्नवन्यकरिणां यूथैः पयः पिबन्तः³ (?) ।।४७६।।

इति ।

यद् वा—

अतीर्णशुक्तपुटमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ।।४७७।।

इति ।

यद् वा—

बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्र ।।४७८।।

इत्यादि

(न) बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः ।
इत्याप्तवचनं प्रायो लङ्घितं कविवर्त्मनि ।।४१०।।

---

1. प्रत्यादेशोऽपि—इति समीचीनम् ।
2. येनाकुम्भनिमग्न—इति सन्दर्भानुसारी पाठः ।
3. पीयते—इति सन्दर्भोचितः पाठः ।

यथा—

कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ॥४७९॥

यद् वा—

उपवसति वसन्तस्यावसाने मधूक-
द्रवकुसुमकडारच्छायविश्रान्तकान्ताः ।
दद(ति) मुदमिदानीं भूमयः पामराणा-
मविर(त ?)लखलधानक्षोदकोलाहलिन्यः ॥४८०॥

इति ।

**समासान्ते च दश्येते प्रायशः शतृशानचौ ।**

क्वचिद् दृश्यत इत्यर्थः । यथा—

प्राप्तकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ॥४८१॥

इति ।

यथा च—

वात्याचक्रविवर्तिताम्बुजरजश्छत्त्रायमाणा ॥४८२॥

इति ।

बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥४८३॥

इति च ।

**सम्भाव्यस्य निषेधे (च) द्वौ निषेधावुदाहृतौ ॥४११॥**

यथा—

विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभा गुणहेमदामभिः ।
इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥४८४॥

न नर्मसाचिव्यमकारि नेन्दुना ॥४८५॥

**विशेषणेन संसिद्धौ विशेष्यं न क्वचित् कृतम् ।**

यथा—

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ॥४८६॥

इति ।

**तथा सम्बन्धसम्बन्धे षष्ठी कमलकन्दवत् ॥४१२॥**

यथा—

विमलकमलकन्दच्छेदगौरैर्मयूखैः ॥४८७॥

**जातिमात्रविवक्षायां लिङ्गेषु स्यादनादरः ।**

यथा—

'मृगक्षीरम्' इति ।

**तथा च लिङ्गनियमः पदानां परिहीयते ॥४१३॥**

यथा—

वत्से मा बहु निःश्वसीः कुरु सुरागण्डूषमेकं शनैः ॥४८८॥

गजाय गण्डूषजलं करेणुभिः ॥४८९॥

इत्यादि ।

गण्डूषशब्दो न स्त्रियां प्रयुक्त[1] आम्नातोऽपि स्त्रीत्वे ।

**देश्यानामपि शब्दानामनुद्वेगं निवेशनम् ।**

यथा—

यतो यतोऽङ्गादपयाति कञ्चु(की ? क)-

(नि ? स्त)तस्ततः स्वर्णमरीचिवीचयः ।

यतो यतोऽस्या निपतन्ति वृष्टय-

स्ततस्ततः श्याममरीचिवृष्टयः ॥४९०॥

इति ।

यद् वा—

किरन्तः कावेरीलडहलहरीजर्जरकणान् ॥४९१॥

इति ।

**(वितावििषप्ठेष्टा ? द्वित्वाविष्टा च)जातिः स्यात् प्रयुक्ता प्रायशो बुधैः॥४१४॥**

"स्तनयोस्तरुणीजनस्य" (४९२) इति ।

प्रायश इति वचनात् क्वचिद् न भवति । यथा—

'स्त्रीणां चक्षुः' इति ।

**जेतुरेवारिशब्दाद्यैर्नियता नामकल्पना ।**

**महाकविप्रयोगेषु निर्वाहः क्वचिदन्यथा ॥४१५॥**

---

1. प्रयुक्तः—इत्येवं समीचीनं स्यात् ।

विहगविधुरमुक्तं लोकमुत्कम्पयन्ती
नवनिविडजडिम्ना हेमनीस्ताभिमानो[1] (?)।
जयति परमम(स्तं ? स्त्रं) जैत्रमेकं भवारे-
रधिरजनि जनीनां पूज्यकर्मा कुचोष्मा ॥४९३॥

**पूर्वमध्योत्तरपदैः प्रकृतिप्रत्ययोभयैः ।**
**त्यज्यन्ते बहुशः स्वार्थाः समभिव्याहृतेर्बलात् ॥४१६॥**

पूर्वपदार्थत्यागो यथा—

"शिशिरशीकरवन्तुरमातुरा" (४९४) इति ।

प्रत्यार्थत्यागो यथा—

"नवशाड्वलराजिभिः" (४९५) इति ।

उभयत्यागो यथा—

"ताभ्यां गताभ्यां गताम्" इति ।

**भजन्त्यपरमर्थं च शब्दशक्तिस्वभावतः ।**

यथा—

गलितवयसामङ्गे पुंसां प्रसेदुषि मानसे
मदगजसमारोहक्रीडापि देहपरिश्रमः ।
अपि नरपतिप्रार्थ्यश्चूडामणिः शिरसो भरः
कुवलयदृशां कण्ठग्राहो(प्यहोनु[2])गलग्रहः ॥४९६॥

**कार्मुकज्यादिशब्दानां प्रयोगोऽभ्युपगम्यते ॥४१७॥**
**महाकविप्रयुक्तत्वादर्थोत्कर्षोऽस्तु वा न वा ।**

यथा*—

**यतः पुरस्तान्निर्देशे तदवश्यं निबध्यते ॥४१८॥**

देवी त्वदङ्घ्रिनखराग्रभुवो मयूखाः ॥४९७॥

इत्यादि ।

---

* अत्र कियानपि ग्रन्थभागस्त्रुटित इति मन्ये ।

1. हैमिनी यामिनी सा—इति युज्यते ।

2. प्यहो नु—इति सुष्ठु ।

[1]मूर्ध्नि (?) समस्तानां च शब्दानामर्थादाकर्षणं पुनः ।
क्रियादिषु क्रियादीनामारोपश्च यथोचितम् ॥४१९॥
यथाप्रयोगं द्रष्टव्याः स्वीकर्तव्याश्च पण्डितैः ।

यथा—

[2]श्लाघ्यो वृष्टिर्दुहितरि गिरे(?)र्न्यस्तचापैककोट्यां
कृत्वा बाहुं त्रिपुरविजयानन्तरं ते स्थितस्य ।
मन्दाराणां मधुसुरभयो वृष्टयः पेतुरार्द्राः
स्वर्गोद्यानभ्रमरवनितावत्तदीर्घानुयात्राः ॥४९८॥

असाधवोऽपि स्वीकार्याः शब्दाः शिष्टप्रयोगतः ॥४२०॥
[3]तैरचक्रोपपेचा(त्याः? द्याः) स्वीकार्याः साधवोऽपि न[4] ।
ततो हि मुक्त्वा साधुत्वमप्रयुक्तं विनिन्द्यते ॥४२१॥

रुद्रादीनामेकशेषः

असन्नपि प्रयोगवशात् स्वीकर्तव्य इति । 'रुद्रौ भगवताम्' इति । अत्र "पुमान् स्त्रिया" (१. २, ६७) इत्येकशेषे [5]"'तल्लक्षणश्चेदेव विशेषः" इत्यधिक्रियते । तत्रैवकारेण स्त्रीपुंसकृत एव विशेषे[6] भवति । रुद्रा(दि ? णी)त्यत्र 'पुंयोगादाख्यायाम्" (४. १. ४८) इति (वि)शेषान्तरमप्यस्तीत्येकशेषाभावः प्राप्तः । "इन्द्र(वरुण)भवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्" (४. १. ४९) इत्यनेन सूत्रेणेन्द्रादीनां षण्णामानुगागममात्रं विधीयते, ङीष्प्रत्ययस्तु "पुंयोगादाख्यायाम्" इत्यनेनैव भवति ।

(तथा) मार्गात्मनेपदम् ।

यथा—

'मार्गन्ते देहभाराः' (४९९) इति ।
'वनगहननिमग्नान्मार्गमाणाः' इति च । ॥५००॥

अत्र "आधृषाद् वा" (ग० ३. १. २५) इति विकल्पितणिच्को 'मार्ग अन्वेषणे' इति चौरादिको धातुः परस्मैपदी च ।

---

1. मूर्ध्नि—इति त्वधिकम् ।
2. श्लाघ्या—इति समीचीनः पाठः ।
3. द्र०—म० भा० पस्पशाह्निकम् ।
4. नः—इति शोभनः पाठः ।
5. "वृद्धो यूना तल्लक्षणश्चेदेव विशेषः" (पा० १।२।६५) ।
6. विशेषो—इति भाष्यम् ।

तथा शिष्टप्रयोगः -

करकिसलयं धूत्वा धूत्वा विमार्गति वाससी ॥५०१॥

इति ।

## तिरोऽन्तर्धौ तिरस्कारः

'अश्रुभिर्यस्तिरस्कृतः' "तिरोऽन्तर्धौ" (१. ४. ७१) 'विभाषा कृञि' (१.४.७२) इति गतिसंज्ञा । तस्यां हि "तिरसोऽन्यतरस्याम्" (८. ३. ४२) इति सकारः ।

यथा—

'लावण्यप्रसरतिरस्कृताङ्गलेखाम्' (५०२) इति ।

अत्र पुनः परिभवार्थे न प्राप्त इति ।

## क्यङ्क्यषौ विरलादितः ॥४२२॥

यथा—'विरलविरलायमानमलयमारुतः' (५०३) इति ।

अत्र "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" (३. १. १२) इति क्यङ् न भवति, विरलशब्दस्य भृशादिष्वपाठात् । 'लोहितादिडाज्भ्यः क्यष्' (३. १. १३) इति क्यषा च न भाव्यम्, लोहितादिष्वभावात् । आतित्वेऽपि[1] प्रचुरयोरभावात् (?) प्रचुरशब्दो न लोहितादिः । तस्य "अनुदात्तङित आत्मनेपदम्" (१. ३. १२) इति, "वा क्यषः" (१. ३. ९०) इति वा आत्मनेपदं च न भवति (?) ।

## बिम्बाधरादिशब्दानामुपमानस्य पूर्वता ।

यथा—

'बिम्बाधरः पीयते' ॥५०९॥

'बिम्बाधरासन्नचरं द्विरेफम्' (५०४) इति च ।

"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२. १. ५६) इत्यनेनाधरबिम्बमिति भाव्यम् ।

तथा च शिष्टप्रयोगः—

मदरक्तकपोलानि मधुगन्धीनि योषिताम् ।
विशदाधरबिम्बानि वदनानि पपौ नृपः ॥५०५॥

## षष्ठीसमासो विन्यस्तः पक्ष्मापिङ्गलिमादिषु ॥४२३॥

यथा—

'पक्ष्मालीपिङ्गलिम्नः कणलवः' ॥५०६॥

इति ।

---

1. आदित्वेऽपि—इति समीचीनम् ।

अत्र "पूरणगुण०" ( २. २. ११ ) इत्यादिसूत्रेण षष्ठीसमासप्रतिषेधः प्राप्तः। * यथा—'गुणानामिह विस्तरः' इति "प्रथने वावशब्दे" ( ३. ३. ३३ ) इति घञा भाव्यम् ।

[1]विश्रामविपदवर्णनं । (?)

यथा—

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ॥५०७॥

अत्र श्रमेरमन्तत्वात् "मितां ह्रस्वः" ( ६. ४. ९२ ) प्राप्तः । एवं 'विरामः शर्वर्याः' (५०८) इत्यादिष्वपि द्रष्टव्यम् ।

तृणकाष्ठं काष्ठतृणमित्यादौ नियमच्युतिः ॥४२४॥

यथा—

'सुलभतृणकाष्ठेषु पथिषु', 'अपि काष्ठतृणं हरेत्' इति च ।

अत्र लघ्वक्षरं पूर्वं निपततीति तृणकाष्ठमेव प्राप्तमिति ।

बहु(ल ?)त्वं कृमिकीटादौ

"कृमिकीटाश्च जीवन्ति" (५०९) इति ।

अत्र "क्षुद्रजन्तवः" ( २. ४. ८ ) इत्येकवद्भावः प्राप्तः ।

अरिहेत्यादिसिद्धयः ।

अत्र "ब्रह्मभ्रूणवृत्रेषु क्विप्" ( ३. २. ८७ ) इति नियतविषयत्वात् सर्वधातुभ्यः क्विप् इति क्विप् न प्राप्तः ।

[2]अवतारावचययोर्दीर्घ-व्यत्यास-कल्पनम् ॥४२५॥

यथा—'मलयमारुतावतारतरङ्गध्वजांशुकेषु' इति ।

अत्र "ऋदोरप्" ( ३. ३. ५७ ) इत्यनेनाबेव प्राप्तः ।

यथा—'पुष्पावचयसमयः' इति । "हस्तादाने चेरस्तेये" ( ३. ३. ४० ) इति घञ् प्राप्तः ।

तथा भूतविवक्षायां प्रयुक्तोऽनुकरोति च ।

यथा—

'अनुकरोति भगवतो नारायणस्य' इति । षष्ठ्यप्यत्र चिन्तनीया ।

---

* अत्र कियानपि ग्रन्थांशस्त्रुटितः प्रतिभाति ।

1. विश्रामादिपदवर्णनम्—इति स्यात् ।

2. अवतारापचययो—इति समीचीनं स्यात् ।

**न ( दीष्विडिज?ङीष् च श्च )बलादिभ्यः**

यथा—

**उपस्रोतः स्वस्थस्थितमहिषगोवर्गशबलाः**
**स्रवन्तीनां जाताः प्रमुदितविहङ्गास्तटभुवः ॥५१०॥**

अत्र "अन्यतो ङीष्" ( ४. १. ४० ) इत्यनेन ङीषेव प्राप्तः ।

**नीलेति प्राणिनि क्वचित् ॥४२६॥**

यथा—

**कुवलयदलनीला कोकिला बालचूते ॥५११॥**

अत्र "जानपदकुण्डगोण०" ( ४. १. ४२ ) इत्यादिसूत्रेण 'नीलादोषधौ', 'प्राणिनि च' इति ङीषेव प्राप्तः ।

**मनुष्यताविवक्षायामङोऽपि नियमच्युतिः ।**

अपिशब्दात् 'इतो मनुष्यजातेः' ( ४. १. ६५ इति ङीषोऽपि ग्रहणम् ।

**वरतनुरथवा ते नैव दृष्टा प्रिया मे[1] ॥५१२॥**

मनुष्यताविवक्षा( मूपूर्जनः ? यामूङ् न ) कृतः ।

ङीषो यथा—

**मन्दरस्य मदिराक्षि पार्श्वतो**
**निम्ननाभि न भवन्ति निम्नगाः ।**
**वासु वासुकिविकर्षणोद्भवा**
**भामिनीह पदवी विभाव्यते ॥५१३॥**

[2]विवक्षायाम(नु ?)भावो यथा—

**हृतोष्ठरागैर्नयनोदबिन्दुभि( निमग्ननाभेः)' (५१४)** इत्यादि ।

**ठञोऽपि बाधः क्वापि**

**'एकदण्डी एकदेशी'** इति । अत्र "एकगोपूर्वाट्ठञ् नित्यम्" ( ५. २. ११८ ) इति ठञ् प्राप्तः ।

**शाश्वतादिर्भवोद्भवः ॥४२७॥**

यथा—

**'शाश्वतं ज्योतिः' इति ।**

अत्र 'कालाट्ठञ्' ( ४. ३. ११ ) इति ठञ् प्राप्तः ।

---

1. "वरतनुरथवासौ नैव दृष्टा त्वया मे"—इति वाम० काव्य० सू० वृ०, अधि० ५, अ० २, सू० ४७, उदा० २१ ।
2. अत्र वामनः—'इत्यत्र निमग्ननाभेरिति मनुष्यजातेरविवक्षेति ङीष् न कृतः । का० सू० वृ० ५।२ सू० ४९ ।

आदिशब्दाच्छार्वरादि । यथा—

**शार्वरस्य तमसो निषिद्धये[1] ॥५१५॥**

इति ।

**मुग्धिमादिष्विमनिच् सिद्धः**

यथा—

**'वैदग्ध्यादपि मु(क्ति ? ग्धि)मा' (५१६)** इति ।

अत्रेमनिज् मृग्यः ।

**समासो रा(त्र ? त्रि)वृत्त(यः ? योः )**

यथा—

**रात्रिवृत्तमनुयोक्तुमुद्यता ॥५१७॥**

इति ।

अत्र 'क्तेनाहोरात्रावयवाः" ( २. १. ४५ ) इति समासो न प्राप्तः, रात्रे रात्र्य-(न)वयवत्वात् ।

तथाहि तत्रैतत् प्रत्युदाहरणम्—

**उलूखलैराभरणैः　　　पिशाचीदमभाषत ।**
**एतत्तु मे दिवा नृत्तं　रात्रौ नृत्तं[2]···द्रक्ष्यसि ॥५१८॥**

**बहुव्रीहौ सरजसं**

**मधु सरजसं मध्येपद्मं पिबन्ति मधुव्रताः ॥५१९॥**

इति ।

अत्र 'अचतुरविचतुर०" ( ५. ४. ७७ ) इत्यादिसूत्रेण सरजसमित्यव्ययीभाव एव निपातितत्वादत्र न प्राप्तम् ।

**प्रह्लिलेत्यादिसिद्धयः ॥४२८॥**

यथा—

**इतश्चेतश्चाभ्रंलिह् - लहरि - हेला - विलुलित-**
**क्षितौ [3]तीव्रप्रासैकप्रह्लिलमिति पोतः पतिरपाम् (?) ॥५२०॥**

इति ।

---

1. कुमा० स० ८।५८ ।
2. नृत्यं च—इति युक्तः पाठः ।
3. तीव्रप्रासप्रह्लिल इति पीतः—इति समीचीनः पाठः ।

अत्र लक्ष्मिन्त्यः। आदिशब्दान्मदावल्लादयः। किञ्च, आदित्यदर्शनः, हिमवच्छ्रावः, कृष्णसर्पः, लोहितजालिः, प्रासादपतित इत्यादीनां शास्त्रानुमतौ सत्यामप्यप्रयोगादप्रयोगः।

**इति प्रयोगवशतः स्वीकर्तव्याः न प्रश्वद्धृद्द्वृभिः[1] ॥४२९॥**

अनेन प्रपञ्चेन प्रयोगस्यैव प्रावल्यं प्रकटितम्। अत्र प्रकरणे यन्निषिद्धम्, तदप्रयुक्तदोषस्थाने द्रष्टव्यम्। यत् (प्रसूतिप्रस्मृतं ? प्रतिप्रसूतं ) तद्वैशेषिकगुणस्थाने निक्षेप्तव्यमिति रहस्यम्।

ननु साध्वप्यप्रयोगे हेयम्, असाध्वपि प्रयोगे सत्युपादेयमित्युक्तम्। किमिदं प्रयोगवृत्तेः साधुत्वं नाम ? स्यादेतत्। प्रयोग एव चेत् साधुत्वम्, म्लेच्छप्रयुक्तानां गव्यादीनामपि प्रसज्यते ? म्लेच्छप्रयोगस्य विशिष्टकालावच्छिन्नत्वात्। ततः प्रस्तरादप्रयुक्तानामेषामपभ्रष्टत्वं प्राचामपशब्दस्त्ववाच्च( को न ) सुशब्द इति साम्प्रतम्। नहि नीलं किञ्चित् प्रत्यनील भवति। कालक्रमेण वर्णपदवदिदमवपद्यत इत्यपि न। अविकारिणो नित्यस्य विकुर्वाणं विरुद्धधर्मदर्शनप्रमितभेदं वस्तु न दृ(ष्टान्तः ? ष्टम् )। तत् कदाचित् क्वचिल्लालाद्युपहतैः पुरुषैरन्यथोच्चार्यन्ते, तेऽपभ्रंशाः; ते पुनर्व्युत्पन्नानां स्वयमवाचका अपि स्वप्रकृतिभूतसदृशसुशब्दस्मारणात् तदर्थमि(यं ? मे) जनयेयुः। ये बालास्तत्रैव प्रथमे व्यवहारे व्युत्पाद्यन्ते, तेषामेषु वाचकत्वाभिमानः। एवं तन्मूलानामपि। अत्रोक्तम्—

अनिदम्प्रथमाः शब्दाः साधवः परिकीर्तिताः।
त एव शक्तिवैकल्यप्रमादालसतादिभिः ॥
अन्यथोच्चारिताः पुम्भिरपशब्दा उदीरिताः।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः ॥ इति।

अनादिरपभ्रष्टता साधुतेत्युक्तम्।

उच्यते—अनादौ प्रभवति महति संसारे वषट्शब्दप्रयोगाणामप्यनादिकत्वादपभ्रंशानामिदम्प्रथमा, सा निर्धारयितुं न शक्यते। शास्त्रपरम्परानुशिष्टानामनादिः प्रयोगो निर्धार्यते, नान्येषामिति चेत्, तस्मिन् शास्त्रानुशिष्टत्वमेव साधुत्वमङ्गीकर्तव्यम्, किमन्येन ?

[2]किञ्च, अयं हि प्रयोगस्य विषयः—चत्वारो वेदा ऋग्यजुःसामाथर्वलक्षणाः। तत्र ऋग्वेद एकविंशतिधा भिन्नः, एकशतं यजुःशाखाः, सहस्रवर्त्मा सामवेदः, नवधा अथर्वणो[3] वेदः, षडङ्गानि, मीमांसा, न्यायविस्तरः, अष्टादश पुराणानि[4], अष्टादश स्मृतयः, अनन्ता उपस्मृतयः, भारतरामायणादिरितिहासः, आयुर्वेदः, धनुर्वेदः, गान्धर्ववेदः, अर्थशास्त्रम्,

1. स्वीकर्तव्या न शाश्वतः—इति साधु सङ्गच्छते।
2. द्र०—म० भा० शब्दानुशासनम्, सू० ५। पदमञ्जरी—अ० १, पा० १।
3. आथर्वणो—इति स्यात्।
4. अनन्तान्युपपुराणानि—इत्याधिकः पाठः—पदमञ्जरी अ० १, पा० १।

कामशास्त्रम्, काव्यानि नाटकानि च। अत्र ये प्रयुज्यन्ते, न ते सर्वेऽपि साधवो व्यवहाराः।

तथाहि वेदे तावत् 'मध्ये अपसव्य तिष्ठन्ती' इति।

अङ्गेषु व्याकरणे--"जनिकर्तुः प्रकृतिः" (१.४.३०), "तत्प्रयोजको हेतुश्च" (१.४.५५) इत्यादि।

वार्त्तिककारस्यापि--[1]वदन् हेहलग्रहणस्य जातिवाचकत्वात् सिद्धमिति तथा [2]तथास्य भाव्यं तु कालशब्दव्यवायादिति।

किञ्च, भाष्यकारस्याविरविकन्यायेस्त्येदि (?)[3]।

ज्योतिषे--'मकरे दशभागायाः सङ्ग्रहं त्यजेत्' इत्यादि।

निरुक्ते--'ब्राह्मणवद् ब्राह्मणात्' इत्यादि।

छन्दोविचितौ --'स्वरार्थं चार्यार्थं प्रत्यूषे ब्रह्म चिन्तयेत्'।

कल्पसूत्रादिषु--[4]अवसमानमितरज्योतिष्टोमेन समानमितरवैकाहिकेन बहिष्पवमाने सदसिस्तु वीरान् प्रत्यसित्वा प्रायश्चित्तं जुहुयात्। आज्येनाक्षिणी आज्यं मूर्धन्यादि एजिप्राण' (?) इत्यादि।

मीमांसायाम्--'गव्यस्य च तदादिषु'[5], 'दावोस्तथेति (?) च'[6] इत्यादि।

न्याये-'प्रमाणानुग्राहकस्तर्कः', 'साधनाव्यापका, साध्यसमा व्याप्तिरुपाधिः' इति।

पुराणे-'भूतादिना नभः सोऽपि महता परिवेष्टितः' (५२१)।

स्मृतौ-'ज्ञाताः सन्ति मे न्याव्वति' [?]।

उपस्मृतौ-'पितृणां नृत्यते गणः'।

इतिहासे-

'अस्मिन् क्षणे प्रियशतानि विसर्जयित्वा पूर्णाः सकर्मफलगताः[7] (?) प्रयन्ति।'

'प्रदीयतां दाशरथाय मैथिली'[8] (५२२)।

---

1. दम्भेर्हल०—इति शुद्धः पाठ ऊह्यः (पा० अ० १.१.१०, वा० १ )।
2. तथान्यभाव्यभाव्यं तु-एष पाठोऽप्यूह्यः (शि० सू० १, वा० ११)।
3. अविरविकन्यायेन (म० भा० ५.१.७)।
4. समानमितरज्योतिष्टोमेन समानमितरदैकाहिकेन बहिष्पवमाने सदसि स्तुवीरन्-इत्यूह्यम्।
5. मी० सू० ८।१।१८।
6. 'धावोस्तथेति च' (मी० सू० ९।३।१८)।
7. सुकर्मफलास्त्रिदिवं प्रयान्ति-इति समीचीनः पाठः।
8. यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः।
दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ (वा० रा०, यु० का० १४।३)

"भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना"[1] (५२३)।

आयुर्वेदे—

षड् द्रव्यान् षड्सेवूक्तान् पयसा सह योजयेत् ॥५२४॥

धनुर्वेदे—

यस्मिन् प्रदेशिनीवर्जैश्चतुर्भिर्वातमङ्गुलैः।
तथा गुणेषु कर्तव्यो नीचैर्नीचैरथाविमा ॥५२५॥ (?)

गान्धर्ववेदे—'गात्रमुन्नाम्य रेचयेत्'।

अर्थशास्त्रे—'राजानमनूत्तिष्ठन्ते प्रजाः प्रमाद्यन्तमनुप्रमाद्यन्ति[2]।'

अपि च—

( युगपदुभाभ्यां ताभ्यां यो य प्रहर स उभाभ्य इति सर्वैः प्रपालकाव्यरराजपुत्रादिभिः ? ) प्रयुक्तम्।

कामशास्त्रे— न निर्गुणमपि चाकाङ्क्षेत'।

काव्ये—

... [3]तायाः प्रचकारासौ काकुस्थादतिशङ्कितः[4] ॥५२६॥

चिन्ताकुड्मलित(स्य) कैटभरिपोर्जागर्तयः पान्तु वः ॥५२७॥

उक्तं हि

वेदेष्वपि प्रयोगास्ते भूयांसोऽप्येतृसम्मताः।
सामान्यं छान्दसं वापि येषां नास्त्येव लक्षणम् ॥
ये च व्याकरणस्यैव परे पारे व्यवस्थिताः।
सुतरां तेऽपि गाव्यादिशब्दानेव प्रयुञ्जते ॥
सूत्रवार्त्तिकभाष्येषु दृश्यते चापशब्दनम्।
अश्वारूढाः कथं चाश्वान् [5]विस्मयेयुः सचेतसः ॥

---

1. पुण्योत्सवसमृद्धा च नष्टभर्त्री सराक्षसा।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना ॥ (वा० रा० सु० का० २६।२६)

2. "राजानमुपतिष्ठमानमनुचिष्ठन्ते भृत्याः, प्रमाद्यन्तमनुप्रमाद्यन्ति"—अर्थशा० अधिक० १, प्र० १४, अ० १८, पृ० ७४-सम्पा० वाचस्पति गैरोला, चौख० विद्या० वाराणसी-१९६२ ई०।

3. त्रस्तायाः—इति स्यात्।

4. दतिशङ्कितः—इति शोभनः पाठः।

5. विस्मरेयुः सचेतनाः—अयं पाठश्चिन्त्यः। त० वा० अ० १, पा० ३, श्लो० ९, पृ० २०१, चौखम्बा-संस्करणम्, १९०३।

येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः ।
अन्यथानुगतौ नानुप्रयोगं बाधते स्मृतिः ॥
स्मृत्याचारविरोधेऽपि स्मृतिरेव बलीयसी ।
प्रत्यक्षप्रतिषेधाच्च जनिकर्त्रन्यसाधुता ॥
प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।
देशान्तरस्थितः शब्दो लक्ष्यभूतोऽन्यशब्दवत् ॥
कल्पसूत्र - स्मृतिग्रन्थ - मीमांसा - गृह्यकारिणः ।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥
[1]अन्तो नास्त्यपशब्दानामितिहासपुराणयोः ।
[2]ततो भाष्यादिशब्दानां हस्तिशिक्षादिकारिणाम्(?) ॥ इति ।

अत्र [3]छान्दसानि वेदस्वातन्त्र्येण, आर्षाणि '**छन्दोवदृषयः कुर्वन्ति**' इति ऋषीणां तेजोविशेषेण, गान्धर्वाद्यनुबन्धनानि भरतादीनामनभिहितसंहितावाचकानामर्थप्रकाशमात्रतात्पर्येण, काव्योद्भवानि कवीनां निरङ्कुशानां रसैकतानतया च ( पराजितानि ? परश्शतानि ) प्रयुक्तान्यप्यशिष्टसाधूनि व्यवहृतिषु दुष्यन्ति । तस्मात् प्रयोगादन्यत् साधुत्वमिति मन्तव्यम् । का तर्ह्यपरा साधुता नाम ? शास्त्रव्यञ्जनीया कापि जातिरिति ब्रूमः । यथागस्त्यबुधपुटादिसंस्कारसहकृते चेतसि परीक्षकाणां रत्नतत्त्वम्, तथा व्याक्रिया विदुषां हृदि शब्दानां साधुत्वं परिस्फुरति । उक्तं हि—

यथा च पद्मरागादीन् काचस्फटिकमिश्रितान् ।
परीक्षका वि(मु ? वि)ञ्चन्ति साधुत्वमपि मे तथा ॥

केचिदेवमाहुः—अभ्युदयनिमित्तं साधुत्वम् । तदपि व्याकरणपरम्परया (स)मुन्नीयत इति ।

एतन्मतमपि शास्त्रश्रवणसापेक्षत्वादस्मद्राद्धान्तमनुसरति । तत्राहुः—

अनपभ्रष्टतानादिर्यद्वाभ्युदय - हेतुता ।
व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता ॥ इति ।

ननु प्रयोगो न प्रयोगस्य कारणमिति प्रदर्शितम् । कथमुक्तमसाध्वपि प्रयोगे सत्युपादेयमिति । उच्यते-प्रयोगो नाम शिष्टप्रयोगो विवक्षितः । उक्तं हि—

असाधवोऽपि स्वीकार्याः शब्दाः शिष्टप्रयोगतः । इति ।

**शिष्टप्रयोगः**—शिष्टानां प्रयोगः । अनेन क्वाचित्कः कविप्रयोगो न प्रमाणमिति यावत् ।

---

1. अतो—इत्येष पाठः ।
2. तयोभाष्यां द्विरूपाणां—इत्येष पाठश्चिन्त्यः; त० वा०, अ० १ पा० ३, श्लो० १, पृ० २००, चौखम्बा-संस्करणम्, १९०३ ।
3. च्छान्द०—इति भाष्यम् ।

शिष्टाः—बाणकालिदासादयः । पराशरव्यासवाल्मीकिप्रभृतीनां शिष्टत्वेऽपि स्वातन्त्र्यातिशयेन परमेश्वरस्य ब्रह्मशिरःकर्तनाद्याचारवद् न तत्प्रयोगोऽनुसरणीयः ।

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । इति ।

तस्मात् काव्येषु प्रयुक्ता एव निबन्धनीयाः । अन्यत्र कर्तव्येषु व्यवहारेषु साधव एव प्रयोक्तव्याः, 'साधुभिरेव भाषितव्यम्' इति नियमात् । लौकिकेषूभयेऽप्यादरणीयाः, तेषां काव्यव्यवहारात्मकत्वादिति निर्णयः ।

किञ्च—

**प्रबन्धेषूचिताञ्छब्दान् कुर्यादामन्त्रणादिषु ॥४२०॥**

यथा—'**भगवन् ! अभूमिरेषा शापस्य**' इति ।

यद् वा—

'**अय्य ! आणवेहि**' इति ।

उक्तं हि—

भगवन्निति सम्बोध्यो देवस्तत्प्रतिमोऽपि वा ।
आर्येति वृद्धो विधिवन्महाराजेति पार्थिवः ॥
उपाध्यायेति विद्यादो गुरुराचार्य इत्यपि ।
नाट्ये भावेति विदुरः किञ्चिदूनस्तु मारिषः ॥
समानोऽथ वयस्येति हंहो हंहेति चाधमः ।
राज्ञा विदूषकोऽप्येव वयस्येत्यभिभाष्यते ॥

आयुष्मन्निति सूतार्यैर्भूर्मुनिरत्नं तपस्विभिः ।
स्वामिनस्तनयः श्लाघ्यः कुमारो भर्तृदारकः ॥
सौम्यभद्रमुखाश्चैव देवानां प्रिय इत्यपि ।
सम्बोध्याः शाक्यनिर्ग्रन्था भदन्तेति प्रयोक्तृभिः ॥
देवेति नृपतिर्वाच्यो भट्टेति च महानृपः ।
सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने ॥
अन्यथा पुनरार्येति तद्वज्ज्येष्ठोऽनुजन्मना ।
छन्दतो नामभिर्वाच्या ब्राह्मणैः क्षत्रिया अपि ॥

राजन्निति स्यादृषिभिः क्वचित् सम्बोधनं पुनः ।
कैश्चित् स्वपूज्यपादानां साक्षान्नाम न गृह्यते ॥
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।
अज्जुकेति च वक्तव्या वेश्या परिजनैः स्वकैः ॥

अत्तेति तस्या धात्र्यादिररे रे इति नीचकः ।
बहुत्वसङ्ख्याप्याख्या स्यात् पूज्ये स्वात्मनि वा पुनः ॥

पादमिश्रादयः शब्दाः पूज्यनामान्ततः स्मृताः ।
पर्यायश्च प्रयोक्तव्यो यथास्वमुचितेष्वपि ॥
हृष्टाभिः पतयः स्त्रीभिर्भाष्याः शब्दैः प्रियादिभिः ।
दुश्शीलादिभिरन्यत्र कथ्यन्ते तु यथाक्रमम् ॥
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् ।
नन्दनश्चेत्यभिप्रीतौ वचनानि भवन्ति हि ॥
दुश्शीलोऽथ दुराचारः शठो वामो विरूपकः ।
निर्लज्जो निष्ठुरप्रायः क्रोधे प्रायोऽभिधीयते ॥
द्विजस्य नाम शर्मान्तं वर्मान्तं क्षत्रियस्य च ।
गुप्तान्तं वणिजः प्रायो दासान्तं वृषलस्य च ॥
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ।
नानाकुसुमनामानि प्रेष्यवर्गे चकासति ॥
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ।
गभीरार्थानि नामानि योजयेदुत्तमेषु च ॥
एवं शब्दस्य सन्दर्भः काव्येष्वौचित्यमावहेत् । इति ।

**अर्थानुवर्णनं कार्यं देशवृत्ताद्यपेक्षया ।**

**मगधेषु स्तनौ पीनौ**

यथा—

कलशैरभिषिच्य काञ्चनैस्तं [1]मगधीपीनपयोधरोपमानैः ॥५२७॥

**कलिङ्गेष्वक्षिणी शुभे ॥४३१॥**

यथा—

कलिङ्गपुरकामिनीनयनकान्तिकर्णेजपैः ॥५२८॥

**बाहू प्रलम्बावङ्गेषु**

यथा—

अङ्गाधिराजभुजदण्डसमैश्च सालैः ॥५२९॥

**वङ्गेषु चरणौ मृदु ।**

यथा—

वङ्गाङ्गनाचरणपल्लवकोमलानि ॥५३०॥

**वर्ण्यन्ते केरलस्त्रीणां चित्राश्चिकुरभङ्गयः ॥४३२॥**

"केरलीचिकुरभङ्गिभरं सारणीषु पुनरम्बु दृश्यते ॥५३१॥

1. छन्दोभङ्गभिया 'मागधी' स्थाने 'मगधी'—इति सन्निवेशः ।

स्नानस्निग्धान्ध्रनारीचिकुरविरचनामेचकैःरम्बुवाहैः ॥५३२॥

**पञ्चालेष्वधरस्ताम्रः**

अयिव अभितानिकधूसरेभ्यो···· गर्भताम्बूलरसारुणेभ्यः
पश्यन् श्रियः कर्षति काञ्चनारं पञ्चालनारीदशनच्छदेभ्यः(?)॥५३३॥

**नाभिर्लाटमृगीदृशाम् ।**

लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरः[2] ॥५३४॥

**दाक्षिणात्यवधूनां तु मृष्टा[1] दन्तेषु वर्ण्यताम् (?) ॥४३३॥**

यथा—

सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः ॥५३५॥

**व्याधवल्लवनारीणां तथा हालिकयोषिताम् ।**
**अन्यासां पामरीणां च प्रायेण स्तनवर्णनम् ॥४३४॥**

'व्यामग्राह्यस्तनीभिः शबरयुवतिभिः' (५३६) इति ।

सबन्धनावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्ल (री ? वी)-
रभिप्रवृत्ता इव वारयोषितः ॥५३७॥

परिहरति सुषुप्तं हालिकद्वन्द्वमारात्
कुचकलशमहोष्माबद्धरेखस्तुषारः ॥५३८॥

यच्चैवं हलिनीकुचोष्मसु हिमम् ॥५३९॥

दिनपरिणतिमज्जत्पामरीपीनतुङ्ग-
स्तनतरलितबद्धासन्नतोयास्तटिन्यः ॥५४०॥

**द्रमिला मुरलास्तद्वद् बर्बराः काशिकोसलाः ।**
**पुलिन्दा दाक्षिणात्याश्च प्रायेण असिताः स्मृताः ॥४३५॥**

इह हि वहति कामं कामकोदण्डयष्टि-
द्रमिडयुवतिगण्डश्यामिकां कोशकारः ॥५४१॥

अथैष प्राचीनः सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तनिचयः ॥५४२॥

1. मृष्टं—इति साधु ।

2. द्र०—बालरा० १०।४१ ।

एवमन्येऽपि द्रष्टव्याः,

अत्र केचित् कथयन्ति—

[1]पञ्चालाः शूरसेनाश्च सघषा[2] ओद्रुमागधाः ।
अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः प्रायेण वर्णिताः ॥
शकाङ्गना यत्रन्यत्र हूणनार्यश्च पाण्डुराः ।
"शकयुवतिकपोलापाण्डुना" (५४३ इति
"मदनहूनयवनचिरष्टिकागण्डपाण्डराणि[3] ताम्बूलीवलानि ।"
उद्गर्भहूणरमणीरमणोपमर्दभुग्नोन्नतस्तनविलासनिभं हिमांशोः ॥५४५॥

इति ।

अत्र कैश्चित् केरलाश्च कथ्यन्ते, यथा—

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै-
स्ताम्बूलीपटलैः ...... ... ... ...... ...... ॥५४६॥

इति ।

**[4]वाल्हीकाश्च महाराष्ट्रा मालवाः पल्लवादयः ।
प्रायेण पाटला वर्ण्या ये श्रिता दिशमुत्तराम् ॥४३६॥**

[5]वाल्हीकीरदनच्छदारुणदलैः फुल्लैरशोकोऽञ्चितः ॥५४७॥
हठारितं महाराष्ट्रे दशनच्छदपाटलाः ॥५४८॥
अथ मधुमदवल्लरीकपोलतलकोमलातप ॥५४९॥

इति ।

अन्यच्च द्रष्टव्यम् ।

**नीचानामथ नीलत्वमुत्तमानां च गौरता ॥४३७॥**

सर्वत्र व्यापकमेतत् । गौर(ते)त्यनेन सितपीतरक्तास्त्रयोऽपि गृह्यन्ते, यथामरसिंहः— गौरोऽरुणे सिते पीते' इति ।

तथा च प्रयोगाः—'मूर्ध्नि स्फुरत्तुहिनः' (५५०) इति ।

'कर्णिकारगौरेण विद्धकञ्चुकच्छन्नवपुषा" ।
'यस्मिन् मनागपि नवाम्बुजपत्रगौरम्' (५५१) इति ।

एवमन्यदपि यथाप्रयोगमनुसर्तव्यम् ।

---

1. पाञ्चालाः—इति युक्तं ।
2. सघोषा—इति साधु ।
3. पाण्डुराणि—इति स्यात् ।
4. 5. वाह्लीक०—इति साधु ।

ग्राम्योपनागरिकयोस्तद्वन्नागरिकस्य (च) (कीर्तनम् ?)।
विदध्याद् वर्णनं प्राज्ञो वेषभाषादिचेष्टितैः ॥४३८॥

कन्थाभिः कम्बलैः स्थूलैर्वस्त्रैः पुष्पैस्तथाविधैः।
बालकोशीर-कच्चोर-हरिद्रा - कन्द - रोचनैः ॥४३९॥

वेषः स्यात् प्रकृतिस्थैस्तु वचोभिर्भाषणं भवेत्।
भवन्ति हास्ययोग्याश्च चेष्टा ग्राम्येषु भूयशः[1] ॥४४०॥

वस्त्रं सूक्ष्मं मनोज्ञानि माल्यानि हरिचन्दनम्।
कोमलं भाषितं च स्याच्चेष्टाश्च निपुणक्रमाः ॥४४१॥

उन्नेयाः प्रायशो ह्येवमुपनागरिके जनाः।
श्लक्ष्णं वासोऽमलं क्षौमं कौशेयं राङ्कवं मृदु ॥४४२॥

कार्पासं वा भवेन्माल्यं मालतीचम्पकादिभिः।
कुङ्कुमागरु-कस्तूरी - घनसारादि - लेपनम् ॥४४३॥

वक्रोक्तिसुन्दरं वाक्यं चमत्कारि च चेष्टितम्।
भावहार्यमिदं सर्वं भवेन्नागरिके जने ॥४४४॥

तत्तद्योग्यं भवेद् वर्ण्यं कविभिर्भूषणादिकम्।
यथा सहृदयाह्लादो भवेद् विच्छित्तिभेदतः ॥४४५॥

तत्र वस्त्रमाल्याभरणादिजनितो वेषः। प्रकृतिस्थकोमलकठोराणि भाषितानि। हास्यनिपुणचमत्कारीणि चेष्टितानि। ग्राम्यस्य वर्णने त्वक्फलक्रमिरोमजेषु वस्त्रेषु स्थूलानि। यथा—

कन्थाकम्बलखण्डकल्पितशिरस्त्राणद्वयः कर्पटी-
च्छन्नाङ्गः सकृदाशितंभवकचित्यक्तप्रभाताशनः।
हेमन्ते हिमधूसरेऽप्यनुदिनं वैपादिकोदुम्बर-
क्षीराभ्यासनितान्तकर्कशपदः पान्थः सुखं गच्छति ॥५५२॥

बालकोशीरकच्चोलहरिद्राभिः स्थूलकन्दैरनुलेपः, यथा—

क्रीडन्तीनां हलिकसुदृशामर्पितोशीरलेपै-
रङ्गैरन्तर्नवदमनकोद्गन्धिभिः केशबन्धैः।
वक्त्रैश्चार्द्रक्रमुकसुभगैः शालिखण्डावघात-
स्फारोन्मेषं भवति भवने सम्भृतः कोऽपि गन्धः ॥५५३॥

---

1. भूरिशः – इति समीचीनं स्यात्।

यद् वा—

व्रीहिः स्तम्बकरिः प्रभूतपयसः प्रत्यागता धेनवः
प्रत्युज्जीवितमिक्षुणा भृशमिति ध्यायन्नपेतान्यधीः ।
सान्द्रोशीरकुटुम्बिनीस्तनभरव्यासक्तघर्मक्लमो
देवे तीरमुदारमुञ्झति सुखं शेते हलिग्रामणीः ॥५५४॥

प्रकृतिस्थानि भाषितानि (स्वभावो)क्त्य इत्यर्थः ।

भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः ।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥५५५॥

हास्यं चेष्टितं यथा—

धावति तरुमारोहति शकटमुद्वहति सौधणेति[1] ।
गायति कुविटः[2] परयोषितं दृष्ट्वा[3] ॥५५६॥

इति ।

यथा —

गलनिहितकुसुममालश्चन्दनचर्चाचितः सनिद्रावः ।
भट्टः प्रविशति हृष्टः कुटीरकं भ्रष्टकुट्टन्याः ॥५५७॥

उपनागरिकवर्णने सूक्ष्माणि वासांसि । यथा

आ अं वले अणाणव्योल्लस्सु अपअडो रुजघणाणं ।
ओअंसुअपा अडो रुजहा हणोणंअ अप इह मंजरी ॥५५८॥
कणं कण्णकामो घणुव्वहइ ··· ···· ···· ।"[4] (?)

शोभाप्र(दा)नि माल्यानि । यथा—

1. सौधमेति—इति साधु ।
2. कुविटश्चित्रं—इति साधु ।
3. नृत्यति—इति त्रुटितः पाठो योज्यः ।
4. आअंवलोअणाणं ओल्लंसुअपाअडोरुजहणाणम् ।
अवरण्हमजिरीणं कए ण कामो वहइ चावम् ॥
इत्येष पाठः ( गा० श० ५।७१ )

शुचौ तप्ताङ्गीनां बहलमकरन्दद्रवमुचः
कदम्बप्रालम्बाः स्तनपरिसरे पक्ष्मलदृशाम् ।
हठाल्लूनोष्माणः कमपि महिमानं विदधते
जलक्रीडोत्तीर्णप्रियतमभुजाबन्धशिशिराः ॥५५९॥

चन्दनप्रभृतिभिः कण्डैरनुलेपो यथा—

एतस्मिन् घनचन्दनार्द्रवपुषो निद्राकषायेक्षणा
लीलालोलमृ(दुर्ल ? दूल्ल )लद्भुजलता व्याजृम्भमाणा मुहुः ।
निर्गच्छन्ति शनैरहःपरिणतौ सुप्ता लतामन्दिरात्
स्वेदाम्भःकणवन्तुरस्तनतटाभोगाः कुरङ्गीदृशः ॥५६०॥

कोमलानि भाषितानि अलङ्कारोक्तय इति यावत् । यथा—

अनञ्जितासिता दृष्टिः[1] (भ्रूरता ? भ्रूरना) बर्जितानता ।
अरञ्जितारुणश्चायमधरस्तव सुन्दरि ॥५६१॥

निपुणं चेष्टितम्—'कश्चित् कराभ्याम्' (५६२) इत्यादि ।

नागरिकवर्णने सूक्ष्माणि वासांसि । यथा—

अथास्य रत्नग्रथितोत्तरीय-
मेकान्तपाण्डुस्तनलम्बिहारम् ।
निःश्वासहार्यांशुकमाससाद[2]
घर्मः प्रियावेषमिवोपदेष्टुम् ॥५६३॥

विचित्राणि च सुरभीणि कुसुमानि । यथा—

माला मूर्ध्नि विनिर्मिता कुवलयैः कर्णे कृतं कैरवं
सीमन्ते नवबन्धुजीवकुसुमं राजीवदामोरसि ।
वक्त्रे चन्दनबिन्दुरिन्दुधवलं बालं मृणालाङ्कुरे
वेषः पक्ष्मलचक्षुषामयमहो यूनां मनः कर्षति ॥५६४॥

कस्तूरीकुङ्कुमादिभिः स्निग्धद्रवैरनुलेपः । यथा

डोलायन्तः कपोलेषु कस्तूरीपत्रबन्धुषु ।
अलकानलकास्त्रीणां पपुः कैलासमारुताः ॥५६५॥

---

1. दृष्टिभ्रू—रेषोऽपि पाठः ।
2. ०माजगाम —इत्यपि पाठः ।

यद् वा—

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाढ्याः परिजनवारसुन्दरीणाम् ।
तत् प्रातर्विहितविचित्रपत्रलेखा-
वैवर्ण्यं जहति कपोलकुङ्कुमानि ॥५६६॥

कठोराणि (?) भावितानि वक्रोक्तय इति यावत् ।

मुग्धेऽस्मिन् परिणाहिनि स्तनतटे मुक्ताकलापो वसन्
श्लिष्टत्वा न स्मरति स्वजन्मवसतिं कुम्भस्थलीं दन्तिनः ।
इत्थं केलिभुजङ्गनर्मवचसा (ज्यो ? द्यो)ति स्मितज्योत्स्नया
सव्रीलं[1] मुखमातनोति सुतनुश्छन्नांशुकं स्वेच्छया ॥५६७॥

यद् वा—

यदियदेव विलग्नं वक्षश्चैतावदेतावत् ।
वपुरीदृशी (मृगदृश्यावदस्वस्वकोऽयमारम्भः ?) ॥५६८॥

चमत्कारि चेष्टितं यथा—'विलासिनीविभ्रमदन्तपत्रम्' (५६९) इत्यादि ।

यद् वा—

'चक्रवाकमिथुनं निरष्ठीवम्' (५७०) इत्यादि ।

**आवन्त्या दाक्षिणात्या च पौरस्त्या चोड्रमागधी ।**
**एताः प्रवृत्तयः स्थाप्या यथान्यायं यथोचितम् ॥४४६॥**

आवन्त्या यथा—

पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः ।
वन्दामहे वन्द्यतमं पुनस्तमन्योन्यसम्मिश्रमवन्तिदेशे ॥५७१॥

दाक्षिणात्या यथा—

केशाः सपुष्पगण्डूषा जघने मणिमेखला ।
हारो रक्तांशुकं भद्रं वेषः स्यादान्ध्रयोषिताम् ॥५७२॥

मुखं पातुं फालस्थलनिहितकर्पूरतिलकं
ग्रहीतुं वा केशान् नवकुसुमगण्डूषसुभगान् ।
स्थनायं विन्यस्तप्रचलितजलार्द्रापरिचितौ
न च स्पष्टं शक्यं सुकृतरहितैरान्ध्रसुदृशाम् (?) ॥५७३॥

---

1. सव्रीडं—इति शोभनम् ।

यद् वा—

यल्लीला(ल)कमञ्जनं भ्रमरक स्कन्धस्य यद् बन्धनं
वैचित्री रचना कचेषु कुसुमैर्यच्चोलवामभ्रुवाम् ।
रोचन्ते न च तानि कुन्तलवधूसीमन्तसीमान्तर-
स्फायत्कुङ्कुमकेसरप्रणयिने पुण्याय तच्चक्षुषे ॥५७४॥

पौरस्त्या यथा—

ताटङ्कवल्गिततरङ्गितगण्डलेख-
मानाभिलम्बिदरतोलिततारहारम् ।
आश्रोणिगुल्कपरिमण्डलितोत्तरीयं
वेषं नमस्यत महोदयसुन्दरीणाम् ॥५७५॥

उड्डमागधी यथा—

आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः
सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः ।
दूर्वाप्रवालरुचिरास्वगुरूपभोगाद्
गौडाङ्गनासु चिरमेष चकास्ति वेषः ॥५७६॥

**क्रीडामहिम्न्यो देश्याश्च निवेश्यन्तां यथोचितम् ।**
**द्यूतान्दोलनकौमुद्यो यक्षरात्रिस्मरोत्सवौ[1] ॥४४७॥**
**सुवसन्तकमुख्याश्च महिम्न्यः परिकीर्तिताः ।**
**द्यूतं दुरोदराद्या स्याच्चुम्बनादिपणा क्रिया ॥४४८॥**

आलिङ्गनादिग्लहं दुरोदरादि क्रीडा । द्यूते यथा—

गाढालिङ्गनकेलिपूर्वममुना द्यूते जितं चुम्बनं
दत्तं तत् परिरभ्य किञ्चिदनया प्रत्यर्पितं चामुना ।
नैतत् तादृगिदं च तादृशमिति प्रत्यर्पणप्रक्रमै-
र्यूनोश्चुम्बनमेकमेव शतधा रात्रिर्गता गृह्णतोः ॥५७७॥

यद् वा—

कोऽयं भामिनि भूषणं कितव ते शोणः कथं कुङ्कुमात्
कूर्पासान्तरितः प्रियेऽपि नियमः[2] पश्यापरं क्वास्ति मे ।
पश्यामीत्यभिधाय सान्द्र(पुलको) मृत्रन्[3] मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरवताद् द्यूते हसन्(यो ? वो)हरः ॥५७८॥

1. ०त्सवाः—इति समीचीनं स्यात् ।
2. प्रियविनिमय—इत्यप्यस्ति पाठः ।
3. सान्द्रपुलकौ मृद्नन्—इति साधु ।

**डोलामारुह्य मार्गादौ विहारो डोलनं भवेत् ।**

मार्गशीर्षादिषु डोलामारुह्य विहार आन्दोलनक्रीडा । आदिशब्देन चतुर्थ्यादयोऽपि ( न लभ्यते ? गृह्यन्ते ) ।

यथा—

[1]अन्दोलनलंघिअवअविहाए विट्ठे तुमंमि मुद्धाए ।
आसंघिज्जइ काउं [2]करपेल्लवणिच्चला डोला ॥५७९॥

**क्रीडाश्वयुक्पौर्णमास्यां रात्रौ स्यात् कौमुदीति च ॥४४९॥**

यथा—

अह तइ [2]महत्थदिण्णो कह [3]कहवि खलंतमत्तजणमज्झे ।
[4]तिण्णाअणेसु जाओ विलेवणं [5]कोमुईवासो ॥५८०॥

यद् वा—

वेत्तूण चुण्णमुट्ठी[6] हरिसुसिहाए वेवमाणाए[7] ।
मित्ति मसिणे पिअअमं हत्थे गन्धोदअं जाअम् ॥५८१॥

अणेण पिआत्थणए कोमुइवासे णकइमिज्ज एत ।
ओहसइ परिससुणं उच्चिअमुहो अलिअइत्तो ॥५८२॥

**दीपावल्युत्सवो यक्षरात्रिर्दीपादिहेतुकः ।**

[8]अण्णेविहि होन्ति चणणाण उणो दिवालिआ सरिच्छोदो ।
जत्थ जहि छंगमह पिअवसदीदो अवमिसेण ॥५८३॥

[9]वहिअअपुण्णिअं हरन्ति वेडालत्थणभरं लोओ ।
मअआसवं मि कोसुम्भकचूआमभरणमेत्तओ ॥५८४॥

---

1. अंदोलणक्खणोट्ठिआए; 2. करपेल्लण—इत्येवं पाठः, स० क० ५।२०१ ।

2. महत्थ—इति स्यात् ।

3. 'कह'—इत्यधिकम् ।

4. तिस्सा थणेसु; 5. कोमुई—इति च पाठान्तरम् ।

9. ॰मुट्ठि—इत्यपि पाठः ।

7 ससिआए वेपमाणाए—इत्येवं पाठः ।

8. अण्णे वि हु होन्ति छणा ण उणो दीआलिआसरिच्छा दे ।
जत्थ [जहिच्छं गम्मइ इति; पिअवसही दीवअमिसेण ॥
( इत्युक्तं स० क० ५।३९५ )

9. सहि—इति भाव्यम् ।

त्रयोदश्यां भवेत् कामदेवपूजामहोत्सवः ॥४५०॥

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥५८५॥

"प्रत्यग्रमज्जनविशेषविमुक्तमूर्ति"[1] (५८६) इत्यादि।

भवेद् वसन्तावतारदिवसः सुवसन्तकः ॥४५१॥

पगुप्पच्छणणंदो सक्केण वि कद्दमपहासण दिण्णं।
थणअलसमुसहवलेट्टतसे असो अं कं वहसि ॥५८७॥

छणपिट्ठधूसरत्थणि महुमअतंबच्छि वकुलआभरणे[2]।
कण्णकअचूअमञ्जरि पुत्ति तुए मण्डिओ गामो ॥५८८॥

क्वचित् क्वचिद् भवेच्चूतभञ्जिकाभ्यूषखादिका।
यत्राङ्गनायोपहृत्यावतंस्याच्चूतमञ्जरीम् ॥४५२॥

सा चूतभञ्जिका पक्वशूकधान्यादिखादनम्।
अभ्यूषखादिका चैवं महिम्न्यः [?] परिकीर्तिताः ॥४५३॥

यत्राङ्गनाभिश्चूतमञ्जर्योऽवरुज्यानङ्गायोपहृत्यावतंस्यन्ते, सा चूतभञ्जिका।

यथा—

तुंसि[3] मए चूदंकुर दिण्णो कामस्स गहिअधणुअस्स[4]।
पहिअजणजुइवलक्खो पंचब्भहिओ सरो होहि ॥५८९॥

रूपाप्पिताण्ण सोहइरुइजोक्कामिणीणणेव्वं।
कण्णेजं णव्वलिज्जइ कपोले घेलं कपन्थवं सहआरं ॥५९०॥

शिम्बिधान्यशूकधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारोऽभ्यूषखादिका—

[5]वाअणग्गिणाकरोमेवद्धोत्ति पुणो पुणोच्चिअकएइ।
हेल्लिअसूआमलिओ सहवोहल्लिओषमरजआणो ॥५९१॥

---

1. विविक्तमूर्तिः—इत्येष पाठ ऊह्यः ( रत्नावली १।१ )।
2. ०हरणे—इत्यपि पाठः।
3. तुमं सि।
4. गहीदचावस्स—इत्यपि पाठः।
5. वाअग्गिणा करो से दट्ठो त्ति पुणो पुणो च्चिअ कदेइ।
हालिअसुआ मलिअब्भुसदोहली पामरजुआणो ॥ (इत्यूह्यम्। स॰ क॰ ५।३१६)

अत्रेक्षुभक्षिका च द्रष्टव्या—

[1]दिअरस्ससरअमहुर　सुमइलेण　देई　इहत्थेण ।
पढमं　हिअअं　बहुआ पच्चा　गंडं　सदं　तवणं ॥५९२॥

अथ देश्याः—

उदकक्ष्वेलिका　मध्यदेश्यानां　भूतमातृका ।
विदेहानां　विदर्भाणां　स्मृता स्यादेकशाल्मली ॥४५४॥
कदम्बयुद्धं　पुण्ड्राणां　वने　स्यान्नवपत्रिका ।
प्रायेणानूपदेशेषु　प्रथते　बिसखादिका ॥४५५॥

उदकपूर्णा क्ष्वेला वंशनाली यस्यां क्रीडायां सा उदकक्ष्वेलिका । यथा—

भृङ्गाणि　द्रुतकनकोज्ज्वलानि　गन्धाः
कौसुम्भं　पृथुकुचकुम्भसङ्गि　वासः ।
मार्द्वीकं　प्रियतमसन्निधानमासन्
नारीणामिति　जलकेलिसाधनानि ॥५९३॥

पाञ्चालविहिता　भिन्नभाषावेषोपचेष्टितैः ।
क्रीडा　पाञ्चालानुयानं　प्रहासाद्यनुरञ्जितम् ॥४५६॥
तत्रैव　मुख्या　ख्यातानुकरणी　भूतमातृका ।
केचित्　पाञ्चालानुयानं　पाञ्चाल्युद्गाहमूचिरे ॥४५७॥

पाञ्चालमुनिप्रवर्तिता　भिन्नभाषावेषचेष्टितैः प्रहासक्रीडा　पाञ्चालानुयानम् । यस्यानुकरणिका भूतमातृकेति च प्रसिद्धिः ।

हद्धे　हिमं सन्धमिऊण　बाला　हुङ्कारवक्कारवेहिलुद्दाणि ।
स　अरं पीपाडि सीसणहिं　महामसाणाभिणअ(?)कुणंति ॥५९४॥

इमा मसीकज्जलकालकालकाआ मिअंडवाचाअ　विलासिणीओ ।
पुलिहरूवेण　जणस्सहासस्समोविप्पिचाभरणा　कुणंति ।५९५।

कोदुक्क　अजणग्गमवेसा　वेणुवावणपरा　अपारा (?) ।
वेणुतालरवताडिदलोअं　ओसरंतिपणमंति　हसन्ति ।५९६।

---

1. दिअरस्स　सरअमउअं　अंसुमइलेण　देइ　हत्थेण ।
पढमं　हिअअ　वहुआ　पच्छो　गण्डं　सदन्तवणम् ॥—(इत्यूह्यम् । स०कं०५।२१७)

"कापिधारिटकरालडुक्क" इत्यादि ।

यद् वा—

[1]विहलइसेणेवच्छन्तममान्तीणा अइमण्डणङ्गइ खलइ ।
मूअचछणणच्चणम्मि मुहअमाणं पुलो एसु ॥५९७॥

"पाञ्चालीवरिणयादिप्रवर्तनं पाञ्चालानुयानम्" इति केचित् ।

"अनाकूतैरेव प्रियसहचरीणां शिशुतया वचोभिः" इत्यादि ।

पुष्पितं शाल्मलीवृक्षमाश्रितैः स्थगितेक्षणैः ।
स्त्रीजनैरस्य चेष्टैर्वा क्रीडा स्यादेकशाल्मली ॥४५८॥

एकमेव कुसुमनिर्भरं शाल्मलीवृक्षमाश्रित्य सुनिमीलितकादिभिः क्रीडतां क्रीडा एकशाल्मली ।

को एसोत्ति [2]पऊतसामलीं छवणि अव्विपरिमुसइ ।
[3]अलिअसुअम्मुद्धवहू सेअजलोलेण[4] हत्थेण ॥५९८॥

पुच्छरतसविकहेर भग्गाइतेणवलि जारअं हुउज्ज आन आसा महुवपि ओसेहु आसवरारथ्ये (?) ।

कादम्बनीपहारिद्रकुसुमैः प्रावृडागमे ।
क्रीडा कदम्बयुद्धं स्याद् वधूनां वल्लभैः सह ॥४५९॥

वर्षासु कदम्बनीपहरिद्राकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य कामिनां क्रीडा कदम्बयुद्धम् । यथा—

बहिआविहिअसविसज्जिअकलम्बरअहरिअणीणरुओसि ।
ओदी सलकलम्बत्थ वओव्वत्थणभरोहलि असो ल्लुए ॥५९९॥

छम्मइ पिआए बइओ कलंबवच्छेण मुच्छएदिअरो ।
हम्मइ एपि एणपि अपीडा उणसे सवत्तीण ॥६००॥

---

1. विह(अ)लइ से णेवच्छं पम्माअइ मंडणं गई खलइ ।
मूअक्खणणच्चणअम्मि सुहअ ! मा णं पुलोएसु ॥—( इत्यूह्यम् । स० क० ५।२०६ )

2. पलोट्टु सिवलिवलिअं पिअं परिक्वसइ;

3. इलिअ;

4. लोल्लेण—इति पाठान्तराणि ( स० क० ५।३०२ ) ।

[1]धण्णोसि रेहल्लिद्दहहल्लि अस आपिणथण भरुच्चं।
गेवच्चतस्सविवइणो जन्तुहकुसुमइणिवणड्डत्ति ॥६०१॥

आद्यवर्षोदिततृणे वर्षासु नवशाद्वले।
या कृत्रिमविवाहादिक्रीडा सा नवपत्रिका ॥४६०॥

प्रथमवर्षप्ररूढनवतृणाङ्कुरासु स्थलीषु [2]शाड्वलमभ्यर्च्य भुभुक्तपीतानां कृत्रिम-विवाहादिक्रीडा नवपत्रिका। तत्र वरणविधानादावेवंविधाः परिहासा भवन्ति।

"आसणणकुडुम्गजणणदेदिउले बहुजु आणसक्कि एण धेरोपलत्तिदाच्चसुपुत्ति-दिण्णासि सुम्गामेतारुणह कालभरणं कुरन्तं मिविवरे विवाहस्स जावश अणहप आ रहहेंति कुमारी ए अङ्गाइकइआजा आकलआणसिच्च णणच्चयि आ मादुआवि अकुमारं तं तं जाणइ सव्वं जं महिला ओ जाणन्ति त्थबहोन्ति सहिओपुत्थि अमारुव सजत्थदिदिण्णासि तत्थविगिणिज्जलोका तत्थविगिरि अवाहिणीगोलो।"

अभ्येत्य या भवेत् क्रीडा सरो नूतनबिसाङ्कुरम्।
तत्खादनादिका नानारूपा सा बिसखादिका ॥४६१॥

अभिनवबिसाङ्कुरोद्‌भेदसमये सरः समाश्रित्य नानाक्रीडा बिसखादिका।

यथा—

[3]गह्लंति पिअअमापि अ अमाअअअणा हि बिसलअद्धाइं।
हिअआइं वि कुसुमाउहसाणकआणेअरद्धाइं ॥६०२॥

द्रष्टव्यानि प्रकीर्णानि चेष्टितानि मनीषिभिः।
अष्टमीचन्द्रिका कुन्दचतुर्थी च तथाविधा ॥४६२॥

पुष्पावचायिकेत्यन्या तथा दौहदिकेति च।
ज्ञेया तथान्या च नवलतिका तत्प्रवर्तिका ॥४६३॥

शक्रार्चा च तथा तोयक्रीडा च प्रेक्ष्यदर्शनम्।
मधुपानादिकमिति प्रयोज्यानि यथाविधि ॥४६४॥

---

1. धण्णो सि रे हलिद्दअ हलिअसुआपीणथणमरुच्छंगे।
पेच्छन्तस्स वि पइणो जह तुह कुसुमाइं णिवडन्ति ॥ ( गा० श० ८६२ )
2. शाद्वल—इति स्यात्।
3. गेण्हंति पिअअमा पिअअमाण अअणाहि बिसलअद्धाइं।
हिअआइं वि कुसुमाउहवाणकआणेअरंधाइं ॥ ( इत्यूह्यम्। स० क० ५।२१२)

**अन्यच्च क्रीडितं तत्तत्स्थानेषु विनियोजयेत् ॥४६५॥**

आदिशब्दादुदीयमानादिर्गृह्यते । अष्टमीचन्द्रिकाकुन्दचतुर्थीपुष्पावचायिकादौहृदिकानवलतिकाशक्रार्चातोयक्रीडाप्रेङ्खदर्शनमधुपानादिप्रकीर्णकान्यपि प्रष्टव्यानीत्यर्थः ।

**स्पृहयन्ति मनोभूतमष्टमीशशिनो यथा ।**
**क्रिया चैत्रचतुर्थी सा अष्टमीचन्द्रिका भवेत् ॥४६६॥**

"जहितुमं सच्च विआ वीणिस्सलोदिजू आणेहि तेहिं चिअच्चतेम अमलउम्भो स अंजाआगहृवअलघू आदिण्णं वपलज्जवेहिस्सविसे स एहि अणिवारिअमेवगोहृणच्च अउउञ्चेमि ।"

**नानाविधाना या यूनां हिमतौ यवसंस्तरे ।**
**अवलालोकनी कुन्दचतुर्थी सा प्रकीर्तिता ॥४६७॥**

**पुष्पावचयकर्म स्याद् यूनां पुष्पावचायिका ॥४६८॥**

उपवनेषु कामिमिथुनानां पुष्पावचयः पुष्पावचायिका ।

**विलम्बमानाकुलकेशपाशया कदाचिदाविष्कृतबाहुमूलया ।**
**तरुप्रसूनान्यपदिश्य सादरं (मनोधिना स्य ?) मनः समाददे ॥६०२॥**

**चरणाघातगण्डूषालिङ्गनाद्यैस्तु दोहदैः ।**
**कुसुमोत्पादिका कङ्केल्यादौ दौहृदिका मता ॥४६९॥**

इत्यादि । (?)

यत्र युवतयो वारुणीगण्डूषचरणप्रहारपरिरम्भविभ्रमेक्षणादिभिर्वकुलकङ्केलिकुरवकतिलकादीन् पुष्पयन्ति, सा दौहृदिका ।

"चिणलयणाएसुके सदाण्णं मुहीणणिवउत्तुग्गासिहरग्गपडवस्सज्ज फलं तु एपम्म उत्तसि ऊडदूहं दोलवि आविआसि आसो अमिद्दुवअणाए विहिणोणिप्फलकं केलकरणदोसो सुमुप्पिसिओ ।"

"दोहलअमप्पणोकिण्णमग्गसे"—इत्यादि ।

**तरून् नवलतायुक्तान् भावयन्ति ययाङ्गनाः ।**
**क्रिया मनोज्ञा तु नवलतिकाख्या भवेत् तु सा ॥४७०॥**

यत्र कस्ते प्रिय इति पृच्छद्भिः पलाशादिनवलतादिभिः प्रियजनो हन्यते, सा नवलतिका ।

[1]णवलअपरसं अंगे जहिं जहिं महइ देवरो दाउं ।
रोमञ्चदण्डराई तहिं तहिं दीसइ वहूए ॥६०४॥

भणतेणइरणवत्तु आए दिण्णे वहूरोइदी एत्थणपट्टे ।
गामतरुणिए अज्ज वि विअहं वहुमाणिआ भमइ ॥६०५॥

इवणदलअपहजजद्धवाणतवकअं किंविहलिअसुल्लए ।
अज्जज्जांविवुवइजणो घरे घरे सिक्खउम्महइ ॥६०६॥

इन्द्रोत्सवस्य दिवसः शक्रार्चेति प्रकीर्त्यते ।

सच्चं चिअकट्ठमपो[2] सुरणाओ जेण हलिअधीआए[3] ।
हत्थेहिं कमलदलकोमलेहिं चित्तोण पल्लविओ ॥६०७॥

जलावगाहो ग्रीष्मादौ जलक्रीडेति कथ्यते ॥४७१॥

ग्रीष्मादौ जलाशयावगाहन तोयक्रोडा ।

[4]पिसुणन्ति कामिणीणं जलखुक्कपिअ[5] वऊहणसुहेल्लि ।
कंटइअकवोलोल मउलनच्छाइ[6] वअणाइं ॥६०८॥

यत् प्रियावेक्षणं रागात् स्वतो व्याजेन वा भवेत् ।
तत् प्रेक्ष्यदर्शनं चित्तचमत्कार्यंभिधीयते ॥४७२॥

प्रेक्ष्यदर्शनम् ।

[7]णच्चिहिइ णडो पेच्चिहिइ जणवओ होइ ओविदूसिहिइ ।
जइ रंगवि उढणअरी गहवइ धूआ णपेच्चिहिइ ॥६०९॥

---

1. णवलइ पहारमंगे जहिं जहिं महइ देअरो दाउं ।
   रोमंचदंडराई तहिं तहिं दीसइ वहूए ॥
   (गा० स० ११२८; स० क० ५।३०८)
2. चिअ कट्ठमओ;
3. हलिअधूआए—इति पाठान्तरमुचम् ।
4. पिसुणेन्ति;
5. पिआ;
6. कण्डइअकवोलुफुल्लणिच्चलच्छीइं—इत्यादीनि पाठान्तराणि ।
7. णच्चिहिइ णडो पेच्छिहिइ जणवओ मोहओ नायओ ।
   सो वि दूसिहि जइ रंगविहडणअरी गहवधूआ ण वच्चिहिइ ॥
   (स० क० ५।३११)

यद् वा—

तत्र काञ्चनशिलातलाश्रयो
नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां
व्याजहार सहधर्मचारिणीम् ॥६१०॥

इत्यादि प्रकरणम् ।

यद् वा—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेक्ष्य[1] [2]बिम्बमनुबिम्बमात्मनः कानि [3]कान्यपि चकार लज्जया ॥६११॥

तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिभिन्नरागम्[4] ।
अपश्यतामप्सरसां मुहूर्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥६१२॥

**मदाय मदिरापानं मधुपानं तदुच्यते ॥४७३॥**

माध्वीकादिसेवा मधुपानम् । यथा—

थोआरूढ-महुमआ [5]खणपम्मुट्ठावराह-दिण्णुल्लावा ।
हसिऊण [6]सच्चविज्जइ पिएण [7]सल्लविअ लज्जिआ कावि वहू ॥६१३॥

**महाचतुर्थ्यां कामिन्या दमिन्याया कलिता भवेत् ।**
**उदीयमानानाक्रीडा प्रयोज्याः सम्प्रदायतः ॥४७४॥ (?)**

अत्र वयोवस्थानुरूपाणि गोलक्रीडागूढाभिव्याहारचुटीप्रवर्तनपट्टिका यष्टिकालेखनमुष्टिक्षुल्लकद्यूतमध्यमाङ्गुलिग्रहणाक्षपरिवर्तनषट्पाषाणकलूरन्ध्रिकागोधूमपुञ्जकालवणवीथिकानिलताडितिकावस्त्रग्रन्थिकासौभनिकामण्डलिन्यादीनि देश्यान्यन्यान्यपि निवेशयेयुः ।

---

1. प्रेक्ष्य, 2. बिम्बनुप०, 3. कानि न—इत्येतेऽपि पाठाः ।
4. प्रतिबद्धरागम्—इत्यपि पाठः ।
5. खणपम्हट्ठा—इति पाठान्तरम् ।
6. संठ—इति; 7. संभरिअलज्जिआ कावि पिआ—इति च पाठान्तरम् ।

कुट्टिमादौ पतितोत्पतितसूत्रमयकन्दुकास्फालनादिभिर्गोलक्रीडा । यथा—

आवणइ परिअत्तिद अडेवेगं वीडताडिअ पयोहरंबुरुहं
असमं जसवालउद्धणवलणक्खणव्वहावलअंजं
रमणि रणक्कारं चारचारुसंचाररहसरमणं जरअ वलए
बिसउव्वल्लसिचअदरविवडोरुजुअक्खणगहिअसह
अणंसुअपल्लवमरिपट्ठसिज्जिरणिन्धालं ककणअताटं
कक्काटिपरिहट्ठि अकबोलंइ असुंदरीण सोल्लुइकदुअ
कोला शो .... ... ....'

साङ्केतिकोक्तिगूढाभिव्याहारः । यथा—

ताम्रपर्णीतटेऽवासीत् तस्य सैन्यं मृगीदृशाम् ।
द्यूतं मौक्तिकपुञ्जेषु विद्रुमाङ्कुरगोपनैः ॥६१४॥

एवं यथालोकमन्यान्यपि प्रयोगेष्वनुसन्धेयानि ।

अथ समयस्य प्राबल्यमाह—

**अत्यन्तं रक्षणीयं स्यादौचित्यं काव्यजीवितम् ॥४७४॥**

तदेव द्रढयति—

**षट्प्रमाणविरोधेऽपि समयं नातिलङ्घयेत् ।**
**समयेनाविरुद्धानि प्रमाणानि न लङ्घयेत् ॥४७५॥**

तथापि—

**प्रमाणषट्कमप्युक्तमर्थालङ्काररूपतः ॥४७६॥**

इति ।

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावाः प्रमाणानि ।

तत्र प्रत्यक्षज्ञानं यथा—

कान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥६१५॥

लिङ्गाद् यल्लिङ्गिनो ज्ञानम्, तदनुमानम् । यथा—

सानुतमागमिष्यन् नूनं पतितोऽसि पादयोस्तस्याः ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥६१६॥

सदृशात् सदृशज्ञानं यथा—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।
समूहस्तारकाणां(यत्कटाक्षा ? यः शकटा)कारमाश्रितः ॥६१७॥

प्रदातृवचनं स शब्दः। यथा—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥६१८॥
गाथामेतामवष्टभ्य स्त्रीरत्नं दुष्कुलादपि।
त्वया पाणौ कृता वीर सौरिणीह कुटुम्बिनी ॥६१९॥

प्रत्यक्षादिप्रतीतार्थो योऽन्यथा नोपपद्यते।
अर्थान्तरं च गमयत्यर्थापत्तिं वदन्ति ताम् ॥४७७॥

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥६२०॥

अभावोऽपि प्रमाणाभावः। यथा—"सग्गं अपारिजाअं"[1] (६२१) इत्यादि।

उत्पत्तिविधिसाद्गुण्यदानमे(देनो ? दो)पपादने।
द्वैतीयानि प्रमाणानि शब्दान्तरमुखानि षट् ॥४७८॥
विनियोगविधीष्टानि तादर्थ्यप्रतिपादने।
तार्तीयानि प्रमाणानि श्रुतिलिङ्गमुखानि च ॥४७९॥
प्रयोगविध्यपेक्षाणि क्रमस्य प्रतिपादने।
पञ्चमोक्तप्रमाणानि श्रुत्यर्थप्रसृतीनि च ॥४८०॥
शाब्दान्येतानि मानानि प्रतिस्थानं न च त्यजेत् ॥४८१॥

उत्पत्तिविध्यपेक्षितरूपभेदप्रतिपादकानि षट् प्रमाणानि शब्दान्तराभ्याससंज्ञा-[2]संख्यागुणप्रकरणानीति। स्वरूपपरो हि विधिर्भिनत्ति तत्। तत्र शब्दान्तरभेदो यथा—

संदीक्षीराणणेहेवहि आणच्छेत्तमिहकलमशोपि
च्चोक्काखरं हि अणं च पलइ पअम्मि। (?)

अभ्यासाद् यथा—[3]"अइंसणेण पेम्मं अवेइ" (६२२) इत्यादि।

---

1. सग्गं अपारिजाअं कुत्थुहलच्छीविरहिअं महुमहस्स उरं।
सुमरामि महणपुरओ अमुद्धचन्दं च हरजडापब्भारं ॥
(सेतु० ४।२०; स० क० ३।१७७)

2. सङ्ख्या—इति समीचीनम्।

3. अइंसणेण पुत्तअ सुट्ठु वि णेहाणुबन्धगहिआइं।
हत्थउडपाणिआइं व कालेण गलन्ति पेम्माइं ॥ (स० क० ५।३२८; गा०स० ३।३६)

संज्ञातो यथा—"मैथिलीमुदवहद् रघूत्तमः (६२३)" इत्यादि।

[1]संख्यातो यथा—[2]"द्वयं गतं सम्प्रति शोचनीयताम्" (६२४) इत्यादि।

यद् वा—

रक्तपाटलसमानसौरभमस्य पातुमभवत् प्रियं द्वयम्।
मादनं च मधुमत्तषट्पदं पेशलं च विमलं प्रियामुखम् ॥६२५॥

गुणाद् यथा—'पाण्ड्योऽयमंसार्पितलम्बहारः" (६२६) इत्यादि।

प्रकरणाद् यथा— "शशिनमुपगतेयं कौमुदी" (६२७)।

एवमेतद्भेदकं प्रमाणषट्कम्। परस्परविवेकहेतुर्भेदः। स तु क्रियार्थोप(पद)-भेदात् कारकभेदाद् वा भवति। नात्र तनीयानपि विशेषः। येषां न कार्येऽर्थे पदस्य प्रामाण्यम्, तेषां मते धामतान्तरादयः कर्मैव भिन्दन्तीति (?)। सिद्धे च भेदे प्रधानाङ्ग-भावविवक्षा। तत्र विनियोगविध्यपेक्षितशेषभावप्रतिपादकानि श्रुतिलिङ्गादीनि षट्प्रमाणानि। श्रुतिर्लिङ्गं वाक्यं प्रकरणं स्थानं समाख्येति।

परोपकारे भावो हि शेषः। स श्रुतौ यथा—"अनेन यूना सह पार्थिवेन" (६२८) इत्यादौ।

अनेनेति तृतीयाश्रुत्या पार्थिवस्याङ्गभावः प्रतिपाद्यते। तृतीया हि षष्ठीवद-प्रधाना। "सहयुक्तेऽप्रधाने" (२-३-१९) इति स्मृतेः।

लिङ्गतो यथा—

असौ विद्याशाभिः[3] शिशुरपि विनिर्गत्य भवना-
द्विहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः[4]।
यदालोके स्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥६२९॥

अत्र सौभाग्यस्मृतिकाभिगामिकसमस्तवरगुणाभिधायिपदप्रायोलिङ्गाद( सावित्र्य-न्वाभिप्रायो लिङ्गाद ? )[5]सावित्र्यन्वाभिप्रायनिवर्तने नियोगः।

सर्वभावानां शक्तिर्लिङ्गम्। शक्तिर्नाम सामर्थ्यम्।

---

1. सङ्ख्या—इति समीचीनम्।
2. द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
   कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥ ( कु० स० ५।७१ )
3. शाली—इति पाठान्तरम्।
4. चन्द्रवदनः—इत्येवमपि पाठः।
5. सावित्र्यन्वाभि—इति स्यात्।

वाक्यतो यथा—"कुलेन कान्त्या वय (सा) नवेन" (६३०)।

अत्र आत्मकुलतुल्यः, किन्तु गुणेन संगच्छस्व त्वमिति वाक्यार्थदमिमुदितस्याभिप्रायनिवर्तनविधियोगः (?)।

साकाङ्क्षासन्निधियोग्यार्थपदकदम्बकं वाक्यम्।

प्रकरणतो यथा—"अध्यास्य चाम्भः पृषतोक्षितानि" (६३१) इत्यादि।

अत्र कलापिनृत्तदर्शनं किमन्योपकारकम्, उतेन्दुमतीयौवनश्रीनिर्वेशोपकारकमिति सन्देहे प्रकरणादुत्तरः पक्षः। इदं हि "सम्भाव्य भर्तारममुं युवानम्" (६३२) इत्यादिप्रकरणे पठ्यते।

परमैकार्यपरवाक्यसमूहः प्रकरणम्।

स्थानतो यथा—"असौ कुमारस्तमजोऽनुजातः" (६३३) इति।

अत्र राज्यधुरोद्वहनादीनि सादृश्यात् पितृसन्निधौ श्रूयमाणस्य स्थानतस्तद्गौरवादभ्युपपत्तिः।

समदेशः स्थानमिति।

समाख्यातो यथा—

सहृदयण्णणो जतइ आकेसवेण गिरिधरणे।
गुरुभाव पावडेन विअण्णज्जि अच्चंरदिं पट्ठा॥ (६३४) (?)

अत्र धन्येति समाख्याबलात् सदैव तस्मात् प्रियप्रसादपात्रत्व एव नियोगः।

यौगिकं नाम समाख्या।

एवमेतत् प्रधानविशेषभावाद् विनियोजकप्रमाणषट्कम्। एतेषां समवाये पूर्वं गरीयः। अत्रापि कर्मणः कारकस्य वा शेषभाव इति समानं पूर्वेण। अवगते च प्रधानाङ्गभावे क्रमापेक्षा। अत्र योगविध्यपेक्षितक्रमप्रतिपादकानि श्रुत्यर्था(दी)नि षट् प्रमाणानि। श्रुतिरर्थः पाठः स्थानं मुख्यं प्रवृत्तिरिति।

पौर्वापर्येणानुष्ठानं क्रमः। स श्रौतो यथा—"सम्भाव्य भर्तारममुं युवानम्" (६३५) इति।

अत्र सम्भाव्येति "समानकर्तृकयोः पूर्वकाले" ( ३-४-२१ ) क्त्वाश्रुतेः (श्रोत ? श्रौत )क्रमः।

आर्थो यथा—

रसं जण्णत्तिम्पण्डंतिपमहं पिप्पिअसहावेत्तित्ति।
विरहेण वम्मरिउ हेगुगुणातरसबहुमग्गा॥ (६३६) (?)

अत्र पूर्वं पूर्वं मन्मथवृद्धिः। ततमीर्ष्या प्राङ्मरणाभावः। ततो विप्रियसहिष्णुत्वमिति।

अर्थक्रमो यथा—

**'अग्निहोत्रं जुहोति। यवागूं पचति'** इति।

पाठक्रमो यथा—

**"अनेन कल्याणि करे गृहीते"** (६३७) इति।

अनेन पृथिवी सामान्या दक्षिणाशायाः साधर्म्याच्च पूर्वपतित्वम्, पश्चात् करग्रहणमित्यर्थप्राप्ते वां सामर्थ्यं पूर्वंकरग्रहणम्। ततः पतित्वमिति क्रमः (?)।

स्थानक्रमो यथा—

**सातुग्घज्झण – बाल – अणिच्चं – घर–दार – तोरणिणाओ।**
**सूसरवदणमालिणव्वदिअहं मिविकलताहिच्चिरं अवारारं (?)॥६३८॥**

अत्र गृहद्वारतोरणनिषण्णणाकेन (?) वन्दनमालासन्निवेदिनेऽपि सा विशुष्यति कृशायते चेति क्रमः।

मुख्यक्रमो यथा—

**बेविर-सिण्णकरंगुलि - परिग्गहक्खलिअलेहिणी - मग्गे।**
**[1]सोत्थिव्विअ ण समप्पइ पिअसहि लेहंमि किं लिहिमो॥६३९॥**

अत्र स्वस्तिकशब्दस्य माङ्गल्यकत्वेन मुख्यत्वादाङ्निवेशः। ततोऽस्य हितस्थानप्रयोग इत्यादिक्रमः।

प्रवृत्तिक्रमो यथा—

**पुढमं वामणविहिणा पच्चाइ कओ विअंभमाणेण।**
**थणजुअलेण इमाए महुमहणे व्व वलिबन्धो॥६४०॥**

अत्र विक्रमप्रवृत्ताविव स्तनप्रवृत्तावपि प्राग् वामनः, पश्चाद् बलिर्बद्ध इति क्रमः।

सिद्धेषु भेदाङ्गाङ्गिभावक्रमेषु शब्दानामनेकार्थत्वेवशदाविद्यागवद्यो नार्थानामनुप्रेयत्वा। इति प्राप्तो वा (?) तदर्थनिर्धारणापेक्षा तत्राधिकारविष्यपेक्षितानि समस्तानेकार्थशब्दसाधारणानि प्रकरणादीनि षट् प्रकरणप्रमाणानि—अर्थः, प्रकरणम्, लिङ्गम्, औचित्यम्, देशः, काल इति।

निर्धारणं विभागतः पृथक्करणम्। तदर्थतो यथा—

1. सोत्थि च्चिअ—इति द्र० गा० स० ३।४४; स० क० ५।२२२।

गतिर्वेणी च नागेन वपुरूरू च रम्भया ।
पाणी प्रवालैरोष्ठौ च तस्यास्तुल्यत्वमाययुः ॥६४१॥

प्रकरणाद् यथा—

लच्छीए कुवलअवुलुवकाजलहिमएविरमत्ति विशी ।
जअ--धुव--अंवर- -मालंव्वर- -हिण--मणिव्वइत्ती ॥६४२॥

लिङ्गतो यथा—

[1] कलहो उज्जलगौ असि आसुरअरारस्सुवुं बंति ।
अणिमिसच्चं विहंडवुवर सुहुढणणा ॥ ६४३॥ (?)

औचित्यतो यथा —"सा चूर्णगौरं रघुनन्दनस्य—" (६४४) इत्यादि ।
देशतो यथा—"अमरावत्यां हरिः" इति ।
काले – "त्रेतायामर्जुनः ।" इति ।
एवमेतद्विभागतोऽर्थविशेषनिर्धारकं प्रमाणषट्कम् । उक्तं च—

अर्थात् प्रकरणाल्लिङ्गादौचित्याद् देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न शब्दादेव केवलात् ॥ इति ।

एवं देशकालादिभिश्चार्थनिर्णयः ।

तात्पर्यनिर्णये लिङ्गान्येतानि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

॥ इति सप्तमं प्रकरणम् ॥



1. कलहोओजलगोरं कलहोअसिआसु सरअराईसु ।
चंबंति विअसिअंच्छ विअद्धतुवईमुहं धणा ॥
( शृङ्गा॰ प्र॰ २०८° )

## अथाष्टमं प्रकरणम्

[1]एवं सपरिष्कारं साहित्यं निर्णीय तद्भावकस्य सामाजिकाख्यस्य रसिकस्य रूपमुपवर्णयन् फलभूतां तस्य ( परमसुखप्राप्तिं ) प्रदर्शयति—

ईदृशं भावयन् काव्यं रसिकः परमं सुखम् ।
प्राप्नोति कालवैषम्याद् गुणतस्त्रिविधोऽपि सन् ॥४८२॥

अत्र सत्त्वं रजस्तम इति गुणाः । तद्योगात्[2] सात्त्विको राजसस्तामस इति त्रिविधो रसिकः । यथाक्रममुत्तमो[3] मध्यमोऽधमश्च । सत्त्वं नाम चित्तस्यैकतानत्वहेतुः, रजोऽस्याक्षेपकम् , तम आवरकम् । तस्माद् यथाक्रममचिरचिरचिरतरकालं[4] प्रतिष्ठया काव्यार्थभावनया सर्वस्यापि परमसुखप्राप्तिरित्युक्तं भवति । तदेव प्रकटयति—

[5]काव्यार्थप्रतिसन्धान - धारावाहनरूपया ।
किञ्चिद्भावनया[6] ज्ञानं सुखदं सुखमेव वा ॥४८३॥
[7]तत्स्वरूपमसन्देहमतीन्द्रियमबाधितम् ।
तदिदं युष्मदस्मच्चाभेदप्रलयकारणम् ॥४८४॥
तेन प्रकाशमानेन सर्वो नित्यसुखी भवेत् ॥४८५॥

तथाहि—श्रूयमाणमभिनीयमानम् ( वा )[8] काव्यार्थमनुसन्दधानस्य सामाजिकस्य [9]रामो वा न वायमिति प्रायेण रामोऽयमिति वा रामो नायमिति, राम एवाय-

---

१. एवं 'प्रदर्शयति—इत्यस्य स्थाने भावकस्य सामाजिकस्य फलमाह—इति ख० पु० पाठः समुपलभ्येत ।
२. तद्योगात्'''त्रिविधो—इति ख० पु० नास्ति ।
३. उत्तममध्यमाधमभेदः स्यात्—इति ख० पु० पाठः ।
४. कालभेदाद् रसानन्दमनुभवतीत्युक्तं प्रकटयति—इति ख० पु० पाठः ।
५. काव्यार्थं स्वधिया ध्यायन्—इति ख० पु० पाठः ।
६. भावयतो—इति ख० पु० पाठः ।
७. यत्स्वरूपादसन्देह—इति ख० पु० पाठः ।
८. वाक्यार्थ—इति ख० पु० पाठः ।
९. किमयं रामो नेति वा—इति ख० पु० पाठः ।

मिति वा, अपि च रामोऽहमिति वा, स रामोऽहमिति वा, राममिममनुसन्दधामीति वा ज्ञानेन न रसोत्पत्तिः, किन्तु[1] एतद्विशिष्ट( मा ? म)दृष्टालम्बमात्मानन्दरूपं काव्यार्थानुसन्धानभावनाभिव्यक्तं वेदनविलं यज्ज्ञानम्, तत् प्रकाशमानेन पराङ्प्राप्तिरिति।

ननु,

साहित्यं सपरिष्कारं कविना परिकल्पितम्।
भावयन् रसिको लोके सुखमत्यन्तमश्नुते॥

इत्युक्तम्। तत्र रसान्वयोऽपि परिष्कारः। तेन रसोऽपि तत्सामग्रीमध्यमनुप्राविक्षत्। तेन रसेन रसो भवतीत्युक्तम्। एवं चात्माश्रयदोषः प्रसज्येत[2], तत्र, रसान्वयो नाम साहित्यस्य ( न ) फलान्वयः, किन्तु वाक्येषु तद्विभावादिसमर्पकत्वमित्यदोषः। यद् वा, तत्तद्विभावादिसामग्र्याभिव्यक्तश्शृङ्गाराद्यभिधानवानवान्तरो रसोऽन्यः। स एव काव्यार्थः। तद्भावनया परमरसस्य व्यक्तिर्भवति। सैव प्राप्तिर्भण्यत इति न किञ्चिदाकुलम्। स्यादेतत्। अलमवान्तररसेन। परमरस एव काव्यार्थो भवत्विति। न वा कल्पनागौरवभयम्। सर्वदृष्टमिदमस्माभिरपि द्रष्टुं शक्यते। न हि काव्यस्वरूपसामग्रीसमनन्तरमात्मस्वरूपस्य निरतिशयस्यानन्दस्याभिव्यक्तिः। अभिव्यज्यन्ते[3] च तस्य मात्रास्तत्तदुपाध्यवच्छिन्नाः शृङ्गारादयः। प्रमीयते च तद्द्वारा परमरसप्राप्तिः। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति[4]। अभिव्यङ्ग्ये काव्योत्पाद्यादिशब्दा गौणा मन्तव्याः। भावनापि रस इष्यते। प्राप्तिरपीयं प्रकाशतो नातिरिच्यत इति सकलं सङ्गतम्।

ननु संविदः संवेद्यत्वे का हानिः? किमिति स्वयंप्रकाशतानिर्बन्धः? उच्यते—संविदः संवेद्यत्वे युगपदनन्तसंवित्प्रसङ्गः, अनवस्थापातात्। स्वसत्तामात्रेण संवित्सिद्धिरिति प्रकाशयति। किन्तु प्रकाशमानो यथाऽन्यालोकः। सोऽपि सन्मात्र इति चेत्, न; चक्षुर्गृहीतस्य पटस्य तदानीं तदालोकसद्भावप्रश्ने नियमेन तदस्तित्वाभ्युपपत्तेः। एवं ज्ञानपदार्थस्य तत्कालस्य तत्कालतज्ज्ञानसद्भावप्रश्ने सत्त्वाभ्युपगमात्। इदानीं तदनुमिनोतीति चेत्[5], तथाविधविकल्पाभावात्। अपि ज्ञानं हि ज्ञेयाकारम्। अर्थेनैव विशेषो हि निराकार[6]तयाधिक्रियतामिति। तस्माद् ग्राहके ज्ञाने ग्राह्यं ज्ञानं तद्विषयश्चेति द्वयं

---

१. एतदधिष्ठानात्म। —इति ख० पु० पाठः।
२. इति चेत्—इति ख० पु० पाठः।
३. अत्र विभज्यन्ते—इति ख० पु० पाठः।
४. इत्येतत् —इति ख० पु० पाठः।
५. चेन्न—इति ख० पु० पाठः।
६. तया धिया—इति ख० पु० पाठः।

परिस्फुरेत्। अनेन न्यायेन पूर्वपूर्वेषां ग्राहकाणां बह्वाकारता स्यात्। नैवंविधं ज्ञानं सर्वस्यापि युज्येतेति।

यदि बह्वाकारतां कश्चिन्नानुमन्येत, प्रथमग्राहकस्याप्याकारद्वयवत्ताभ्युपगम्यताम्, ओमिति चेत्, कस्तर्हि तस्याकारः[१] ? स एव ग्राहकज्ञाने चेत्, ग्राह्यग्राहकसंविदोः किमन्तरम् ?

किञ्च संवित्तिः संवेद्येति वदतः संवित्तिशब्देन सर्वसंविद्ग्रहणाद् ग्राहिकाया अप्यङ्गीकर्तव्यत्वात्[२] स्वयंप्रकाशत्वमेवापतति।

प्राकट्यलिङ्गानुमेयं ज्ञानं कश्चिद् व्यपदिशति। तज्जायमानं[३] प्राकट्यं लिङ्गं भवितुमर्हति। तस्य तस्य ज्ञाने प्राकट्यान्तरमप्यपेक्ष्यम्. ...... ।

अतीतमाह—

[1]अतीते वाराणसीयं दाशरथमहाराजा नाम अनुगतिर्गमनमपहाय।
धम्मेन रज्जं काले सितत्तथसोइ सत्तसत्थि सहत्तोनं
जेभिकाअं किपुत्ते एकं च धीतरं विजाइ ओजं तो
रामपणिते नाम अहोसिदुति अलीलक्खणकुमारो नाम
धीता सीतादेवी नाम अपरभागेऽङ्गवाक्यम्। (?)

तस्याप्यन्यदित्यनवस्था। न संवेद्यसमकालं स्पष्टायां संवित्तावनुमेयत्वारोपणमिति ( भूपेणमगमसमध्वजस्यैव ज्ञानस्यावज्ञेयमतमहहासमिति ? ) कृतमतिप्रसङ्गेन।

एवं चेत् कूटस्थ आनन्दो रस एक एवोपाधिभेदत इति घट्टकुट्यां प्रभातम्। साधीयान् भवतः शृङ्गाराद्वैतपरिहारः। नन्दामि च पिबामि चेत्ययं न्यायः। विशिष्टादृष्टजन्मन आत्मगुणोद्भूतिहेतोरनादिवासनारूपस्याहङ्कारस्य च रसत्वमैक्यं च निषिद्धमस्माभिः। न तु कूटस्थात्मस्वरूपस्यानन्दस्यैकरूपस्य भेदो वक्तुं न शक्यत इत्यादि। भेद औपाधिक एवाङ्गीकृतः। वराङ्गनालिङ्गनादिजनितरसभावनया न परमरसप्राप्तिः। एतद्भावनया तत्प्राप्तिरिति कोऽयं नियम इति चेत्, न; तस्याशक्तेः। शब्दार्थभावनाया एव शक्तत्वात्। न हि स्वभावः पर्यनुयोज्यः। श्रूयते हि साहित्यज्ञानादभिमतलक्ष्म्यभिधानपरमसुखलाभः—

---

1. दशरथजातकम्।

१. ग्राह्यज्ञानाकारः—इत्यधिकः ख० पु०।

२. कृतत्वात्—इति ख० पु० पाठः।

३. तज्ज्ञायमानं—इति ख० पु० पाठः।

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचामक्रत[1] ।
[2]अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि[3]वाचि[4] ॥ इति ।

अत एवोक्तम् –

आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता नैते वाचं विप्लुतां धारयेयुः ॥ इति ।

तदेवं काव्यार्थभावनया रसेन स्वनिरतिशयानन्दलाभस्य कविवचनेषु भद्राया लक्ष्म्या निधानस्य च श्रवणात् कविकाव्ययोर्महत्त्वम्, रसिकस्य च प्रयोजनं श्रुतिसिद्ध-मेवेति सर्वं समञ्जसम् ।

॥ इत्यष्टमं प्रकरणम् ॥

। इति साहित्यमीमांसा सम्पूर्णा ।

शुभं भूयात् ।



1. वाचमक्रत—इति समीचीनम् ।
2. अत्रा सखायः—एवं भाष्यम् ।
3. निहिताधिवाचि—एवं भाष्यम् ।
4. ऋग्वेदसंहिता १०।७१।२ ।

# परिशिष्टम्–१

## कारिकानुक्रमणिका

## परिशिष्टम्–२

# उदाहरणत्वेनोद्धृतश्लोकानुक्रमणिका

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ( अ ) | | |
| अंशुकानि प्रवालानि | ८५ | काव्याद० २।६०, स० क० ५।७० |
| अटकमकुटीचन्द्र० | १०६ | स० क० २।१० |
| अखण्डमण्डलः क्वेन्दुः | ५१ | भा० काव्या० २।४४ |
| अखण्डमण्डलः श्रीमान् | ५६ | महावीर०, सु० र० भा०, |
| | | पृ० १०२, श्लो० ६२ |
| अङ्कलेखामकाश्मीरा | ५७ | उ० का० सू० वृ० २।२० |
| अङ्गाधिराजभुजदण्ड० | १६१ | |
| अङ्गानि चन्दनरसैः | १२८ | महासुभाषितसंग्रहः, श्लो० २६३ |
| अङ्गुलीभिरिव केशसञ्चयं | ७६ | कु० स० ८।६३, स० क० ४।१०७ |
| अङ्गुल्यः पल्लवान्यासन् | ५३ | काव्याद० २।६७; स० क० ४।०६ |
| अङ्गेनाङ्गं तनु च तनुना | १० | मे०दू०२।३५, शृ०प्र०,८मः प्रकाशः, |
| | | मैसूरप्रकाशनम् १९५६ |
| अङ्गे न्यस्योत्तमाङ्गं | १२६ | अभि० भा०, ना० शा० १६।६ |
| अग्रे स्त्रीनखपाटलं | २६ | विक्रमोर्व० २।७ |
| अजित्वा सार्णवामुर्वीम् | ८५ | काव्याद० २।२८, स० क० ५।६७ |
| अतीर्णशुक्तपुटमौक्तिक० | १४७ | |
| अथ यन्तारमादिश्य | ५ | र० व० १।५४, शृ० प्र०, २यः प्रकाशः, |
| | १०४ | मैसूरप्रकाशनम् १९५६ |
| अथास्य रत्नग्रथितः | १६६ | र० व० १६।४३ |
| अथैष गुणवान् राजा | १२० | काव्याद० २।२६६, स० क० ४।१२३ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| अवैष प्राचीनः सरति | १६२ | का० मी०, १७ शोऽध्यायः |
| अदर्प इव कन्दर्पः | ४२ | |
| अदृष्टे दर्शनोत्कण्ठा | ७३ | सु० र० भा०, पृ० २६१, श्लो० १ सुभाषिता०, श्लो० १०४२ |
| अधिदिनावधिजीवाः | ६ | |
| अध्यासामासुरुत्तुङ्ग० | ११ | शि०व० २५; शृ० प्र०, ८ मः प्रकाशः, मैसूरप्रकाशनम् १९५६ |
| अध्यास्य चाम्भः | १७८ | र० व० ६।५१ |
| अनञ्जितासिता दृष्टिः | १६६ | काव्याद० २।२०१, स० क० ३।१४ |
| अनाकूतैरेव प्रिय | १७२ | अनर्घराघवम् ३।५, सु० र० भा०, पृ० २५५, श्लो० २७, मुरारिकवेः |
| अनातुरोत्कण्ठितयोः | ७९ | माल० मित्र० ३।१५ |
| अनुरणन्मणिमेखल० | १६ | व० जी० ११६, रुद्रटाल० २।२३ |
| अनेन कल्याणि करे गृहीते | १८१ | शृ० प्र०, ९ मः, प्रकाशः |
| अनेन यूना सह | १७९ | र० व० ६।३५ |
| अनेन सागरान्नूपान् | १४३ | वा० रा० ५।१।१९४ |
| अन्त्रैः कल्पितमङ्गल० | ९०,११३ | मा० मा० ५।१८, दशरू० ४ र्थः प्रकाशः, स० क० १।१५१, ५।५०१ |
| अन्यासु तावदतिमर्द० | ६९ | दशरू० ४ र्थः प्रकाशः, सु० र० भा०, पृ० २२३, श्लो० ७९, विकटनितम्बायाः, सुभाषिता०, श्लो० ७३५, शृङ्गारप्रकाशस्य ७ मे प्रकाशे प्रथमद्वितीयचरणौ तृतीयचतुर्थचरणत्वेनोद्धृतौ |
| अन्योन्यकण्ठाश्लेषेण | ७९ | |
| अपाङ्गनिष्यन्दभराश्रुपूरैः | ८० | |
| अपाङ्गभङ्गिरेषा चेत् | ५५ | |
| अपीतक्षीबकादम्बं | ५६,७७ | काव्याद० २।२००, स० क० ३।११, सु० र० भा०, पृ० ३६८, श्लो० २ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| अपेतव्याहारं | ११३ | स० क० ५।२७६ |
| अप्रगल्भकलकण्ठपञ्चमाः | १४२ | |
| अमृतममृतमास्ताम् | ४१ | |
| अम्बास्तवेषु तव | १४४ | |
| अयं देशो देशो | १२१ | |
| अयमुदयति मुद्रा० | ३६ | स० क० २।२६<br>सु० र० भा०, पृ० ३२७, श्लो० १० |
| अयशो मलिनं मुखं | १४१ | |
| अयि पान्थ विलम्बसे किमेकः | २ | |
| अरत्नालोकसंहार्यम् | ५६ | काव्याद० २।१९७, स०क० ३।६० |
| अरविन्दकरण्डालय० | १४५ | |
| अररे कटाक्षलहरी | १०१ | |
| अर्थिनां कृपणा दृष्टिः | ३८ | काव्याद० १।७७<br>सु०र०भा०, पृ० १०३, श्लो० ५२ |
| अविरतरतक्लान्ता | १४२ | |
| अशोकनिर्भत्सितपद्मरागम् | १३ | कुमा०स० ३।५३,शृ० प्र०,५मः प्रकाशः |
| अश्वि अभितानिकधूसरेभ्यः | १६२ | |
| असकलहसितत्वात् | १० | का०मी०,११ शोऽध्यायः, स०क० २।८४ |
| असम्भृतं मण्डनमङ्गयष्टेः | ५६ | कु० स० १।३१ |
| असहनसखी | ६४ | |
| असारं संसारं | १६ | मा० मा० ५।३, व० जी० २।२०,<br>अभिनवभारती |
| असावुपनीतोऽपि | २५ | स० क० १।७२, शृ० प्र०, ९ मः<br>प्रकाशः, पृ० ३४० |
| असौ कुमारस्तमजोऽनुजातः | १८० | र० व० ६।७८ |
| असौ विद्याशाभिः | १७९ | मा० मा० २।११ |
| अस्ति विशेषाः सुमहाकुञ्जाः | ७ | |
| अस्मान् साधु विचिन्त्य | ६८ | अभि० शा० ४।१७, स० क० ५।५१ |
| अस्मिन् देव लतागृहे | ७५ | उ० रा० च० ३।३७, दशरू०, ४र्थः प्र० |

(आ)

| | | |
|---|---|---|
| आन्त्रप्रोतबृहत्कपालनलक० | ६३ | म० वी० च० ५।१८, स०क० २।२५० |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| उद्गर्भहूणरमणी० | १६२ | वा० का० सु० वृ० ४।२।१, स० क० १।१६३ सु० र० भा०, पृ० ३०१, श्लो० ६६ विद्याकरकवेः |
| उद्दामोत्कलिकां विपाण्डररुचि | ४९, १२४ | रत्ना० नाटिका ४ |
| उद्धर्तैर्निभृतमेकमनेकैः | ९० | शि० व० १०।७६ |
| उन्नमितैकभ्रूलतम् | १०८ | अभि० शा० ३।१२, स० क० २।१ |
| उपलब्धसुभस्तदा स्मरं | ८१ | |
| उपवसति वसन्त० | १४८ | |
| उपस्थितां पूर्वमपास्य | १३४ | र० वं० १४।६३ |
| उपस्रोतः स्वस्थ० | १५४ | |
| उभौ यदि व्योम्नि पृथक् प्रवाहौ | २९ | शि०व० ३।८, का०मी० ८मोऽध्यायः, स० क० १।९५ |
| उलूखलैराभरणैः | १५५ | |
| (ए) | | |
| एकस्या गण्डतलमलं | १४६ | |
| एकस्मिन् शयने पराङ्मुखतया | ७२ | अम० श० २१ |
| एकेनाप्यधिके | १३४ | |
| एकेनालिङ्गन्तं कृष्णं | ११२ | |
| एको हि दोषो गुणसन्निपाते | २५ | कु० सं० १।३ |
| एतस्मिन् घनचन्दनार्द्रवपुषो | १६६ | सदुक्तिकर्णामृतम् १२७८, कालिदास-दण्डिनोः |
| एताः कूलकरञ्जकुञ्जकुहर० | १४३ | |
| एतानि निस्सहतनोः | १०४ | |
| एलालवङ्गलवली० | १४५ | |
| एष राजा यदा राज्यं | ४१ | काव्याद० १।५३, स० क० २।१६६ |
| एष वन्ध्यासुतो याति | २५ | सु० र० भा०, पृ० ३६३, श्लो० ५ |
| (क) | | |
| कङ्कासिन्याः पृथुकुचतटे | १४३ | |
| कथमपि कृतप्रत्यापत्तौ | ६३ | अम० श० ७३ |
| कथय किमिति बाले | १०३ | विद्धशालभञ्जि० ३।१९ |
| कदा कटाक्ष एणाक्ष्याः | १०९ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| चन्द्रितो येन माम्निरङ्ग | १०९ | |
| चयस्त्विषामित्यवधारितं पुरः | ४७ | शि० व० १।२ |
| चरणकमललग्नैः | ३३ | वा० का० सू० वृ० ३।१।१७ |
| चरन्ति चतुराम्भोधि० | ४४ | काव्याद० २।९९, का० मी० ६ष्ठोऽध्यायः, स० क० ४।१९५ |
| चलति कथञ्चित् पृष्टा | ६६ | दशरूपकम्, ४र्थः प्रकाशः |
| चारुता वपुरभूषयदासां | १६ | शि० व० १०।३३, व० जी० ११२३ |
| चित्रं हरिणशावाक्ष्याः | ५६ | वा० का० सू० वृ० ४।३।२२ |
| चूडाचुम्बितकङ्कपत्रम् | १३१ | महाना० २।३, उ० रा० च० ४।२०, महावी० च० १।६, सू० क० ३।६६ |
| च्युतसुमनसः कुन्दाः | ३६ | वा०का०सू०वृ०३।२।१५,औचि० वि०च०५।२, का०मी० १८शोऽध्यायः अभि०भा० २६।२२० |
| च्युतामिन्दोर्लेखां | ३५ | स० क० ५।११२, शार्ङ्गधरपद्धतौ क्रीडाकरस्येति सुभाषितरत्नभाण्डागारे, सुभाषितावल्यौ च चन्द्रकस्येति |
| च्युतो राज्याद् राजन्यश्च | ४८ | |
| **( छ )** | | |
| छत्राकारशिराः सिरालसरल० | २२ | स० क० १।१६ |
| **( ज )** | | |
| जजौ जो जाजीजिज्जाजी | ४६ | शि० व० १६।३, स० क० २।२५६, |
| जनकस्तादृशोऽस्माभिः | ७६ | |
| जम्भारातीभकुम्भो | १४७ | सूर्यशतकम् १ |
| जयति जनताभिवाञ्छितः | १०६ | स० क० २।६ |
| जयति भुजगरज्जु० | ३३ | स० क० १।८४ |
| जयत्यमलकौस्तुभ० | ४६ | का० मी० षष्ठोऽध्यायः, शृ० प्र० ३यः, प्रकाशः, पृ० १०३ |
| जयन्ति ताण्डवे शम्भोः | १४५ | वा० का० सू० वृ० ५।१।१४ |
| जितमिह भुवने त्वया यदस्याः | ८६ | मा० मा० ३।१५ |
| जीवग्राहं विरमतु तपो | ७० | |
| ज्ञाताः सन्ति मे | १५७ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| तीर्थे तोयव्यतिकरभवे | ८१ | र० व० ८।९५, ध्वन्यालो० लो० वृ० उ०, पृ० ८६४, मोतीलालबनारसीदास-प्रकाशनम् १९६३ |
| तीव्रः प्रतापो मधुरं वचस्तु | १४१ | शृ०प्र०, षष्ठः प्रकाशः, पृ० २०४ |
| तेनेऽद्रिबन्ध्या ववृधे पयोधि | ५० | भट्टिका १३।२७, शृ० प्र०, ३यः प्रकाशः, पृ० १०४ |
| तौ सन्धिषु व्यञ्जित० | १७६ | कु० स० ७।९१ |
| त्वं जीवितं त्वमसि मे | ८६, १२३ | उ० रा० च० ३।२६ |
| त्वदाननमधीराक्षम् | ५१ | काव्याद० २।४४ |
| त्वमेवं सौन्दर्या | २८ | वा० का० सू० वृ० ३।२।१३, शृ० प्र०, ९मः प्रकाशः, पृ० ३४७ |

## (द)

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| दंष्ट्रापृष्ठेषु सद्यः | १९ | व०जी० १।२९, सुभा०र० भा० ३९, सदुक्तिकर्णामृते वराहमिहिरस्य उल्लेखः |
| दन्तप्रभासुमनसं | १२७ | उ० का० सा० स० २।२२ |
| दर्पणे च परिभोगदर्शिनी | १७२ | कु० स० ८।११, व० जी० २।६१, स० क० ३।१७० |
| दर्भाङ्कुरेण चरणः | ३६ | अभि० शा० २।१३, स० क० १।११२ |
| दिग्वासा यदि तत् किमस्य | १२४ | महाना० ८।१८, स० क० ३।३४०, औ०वि० च०, सुभाषिता० भट्टप्रभाकरस्य |
| दिङ्मातङ्गघटाविभक्त० | ८५ | स० क० १।१६०, २।५५, ५।४१६, औचि० वि० च०, भट्टभास्करस्य |
| दिनपरिणतिमज्जत्० | १६२ | |
| दीर्घापाङ्गं नयनयुगलं | ४० | शृ० प्र०, १०मः प्रकाशः, पृ० ३७१ मैसूरप्रकाशनम् १९५६ |
| दुःखं मे प्रक्षिपति हृदये | १४७ | |
| दूरारूढप्रमोद | १४७ | |
| दूरे दारुवनानि हारकसुधा | २६ | |
| दृष्टिं हे प्रतिवेशिनि क्षणमिहा० | ११८ | दशरू०, २यः प्रकाशः, स० क० ३।११८, सु० र० भा०, पृ० ३५३, श्लो० ४३ विज्जकायाः |

| श्लो | पृ० | ग्रन्थः |
|---|---|---|
| नलिन्या इव तन्वङ्ग्याः | ५१ | काव्याद० २।४५, शृ० प्र०, १०मः प्र, पृ० ४११ |
| नवशाड्वलराजिभिः | १५० | |
| नवाम्बुदकुटुम्बिनः | १३३ | |
| न स्पृष्टोऽपि त्रिदशसरिता | ८४ | स०क० ५।२-४, शृ० प्र० २३।४४ |
| नास्तावद् विकलकुररी० | ६७ | मा० मा० ५।२० |
| नारिकेरफलषण्डताण्डव० | १३१ | |
| निःशेषच्युत० | १२८ | अम० श० ६०, स० क० ४।२३६ |
| निगृह्य केशेष्वाकृष्टा | ८५ | काव्याद० २।२८२, स०क० ५।६६ |
| निधानगर्भामिव सागराम्बरां | १४८ | र० व० ३।९ |
| निपुणं द्रुहिणेनास्याः | ५५ | |
| निरानन्दः कौन्दे | ३४, ३५ | वा०का० सू०वृ० ३।१।११, स० क० १।८१, सु० र० भा०, पृ० २२३, श्लो० ६४ |
| निर्णेतुं शक्यमस्तीति | १७८ | काव्याद २।२१९, स० क० ३।१७१, सु० र० भा०, पृ० ३१९, श्लो० १७ |
| निर्मग्नेन मयाम्भसि | ७७ | दशरूपकम्, ४र्थः प्रकाशः, सु० र० भा०, पृ० १५, श्लो० २६ रुद्रकवेः |
| निर्माल्यं नयनश्रियः कुवलयं | ४४ | स० क० २।४३, बालरामायणे प्रथमपादमात्रम् १।४० |
| निर्मोकमुक्तमिव गगनोरगस्य | ५४ | |
| नीलेन्दीवरमिन्दुकान्तिरमृत० | ११६ | |
| नीलेन्दीवरशङ्कया नयनयोः | ७५ | महाना० ५।८, स०क० ३।११५ |
| नैतच्चित्रं यदयमुदधि० | १३ | अभि० शा० २।१६ |
| नौश्च दुर्जनवाणी च | ४३ ४७, १३२ | सु०र०भा०, पृ० ५४, श्लो० १४ |
| ( प ) | | |
| पक्ष्मालीपिङ्गलिम्नः | १५२ | सु० र० भा०, पृ० ९७, श्लो० १४२ भवभूतेः |
| पतद्वाराः पारावत० | १३३ | |
| पत्युः शिरश्चन्द्रकलामनेन | १३० | कु०स० ७।१९, का० मी० अ० ९, पृ० १२७; स० क० ५।२६१ दशरू०, २यः प्रकाशः |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| पिपिप्रिय ससस्वयं | ४० | स० क० २।४२, ५।२६ शृ० प्र०; १०मः प्रकाशः, पृ० ३७० |
| पिबन् मधु यथाकामं | १२६ | काव्याद० २।२०६, स०क० ४।९९ |
| पृच्छामः किमिव क्षमाभर० | १२८ | |
| पृष्ठेषु शङ्खसकलच्छविषु | ३७ | वा०का०सू०वृ० ३।२।१४ ना० शा० अभि०भा० १६।१०८, स०क० १।१०४ शृ० प्र० ९मः |
| पौत्री भिनत्तु दुरितं | ७७ | १३ दशः प्रकाशः, पृ० ५६३ |
| पौलस्त्यपीनभुजसम्पदुदस्यमान० | ८१ | दशरू०, ४र्थः प्रकाशः, पृ० २१० चौखम्बाप्रकाशनम् १९७९, शृ० प्र० २।१३८, सु० र० भा, पृ० ११, श्लो० ६० |
| प्रकाशस्वाभाव्यं | १६ | व० जी० १।१० |
| प्रतियोजयितव्यवल्लकी० | ८२ | |
| प्रतीच्छत्या शोकीं | ३४, १२६ | का० मी०, अ० ५, पृ० ४८; स० क० १।८८ |
| प्रत्यग्रमज्जनविशेषविमुक्तमूर्त्तिः | १७० | रत्नावली० १।२१ |
| प्रत्यादेशापि च मधुनो | १४७ | |
| प्रथममरुणच्छायस्तावत्ततः कनकप्रभः | ४७ | व०जी० १।४०, स०क० १।१२०, शृ०प्र०, ६मः प्रकाशः, पृ० ३३१, ३४७, सु० र० भा०, पृ० ३०१, श्लो० ८५, सुभाषिता० २००४ |
| प्रथममलसैः पर्यस्ताग्रैः | ३८ ४७ | वा०का०सू०वृ० ३।२।१४ |
| प्रदीयतां दाशरथाय मैथिली | १५७ | वा० रा० यु० का० १४।१३, महाना० ६।३२, ३८ ३५ |
| प्रबुध्यते नूपुरशिञ्जितैः पुरं | १३९ | |
| प्रभ्रंशयां यो नहुषं चकार | २६ | र० व० १३।३६ |
| प्रयच्छतोच्चैः कुसुमानि मानिनी | ८२ | किराता० ८।१४, शृ० प्र०, १०मः प्रकाशः, पृ० ३९३ |
| प्रविवेश पुरीं तया विना | ७९ | |
| प्रसन्नाः कान्तिहारिण्यो | २ | सुभाषितावल्यामुद्धृतं भट्टत्रिविक्रमस्य; शृ०प्र०, ७मः प्रकाशः, पृ० २२३ मैसूरप्रकाशनम् १९५६ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| भृङ्गेण कलिकाकोशः | २६ | स०क० २।५७, वा० का० सू० वृ० २।२।११ |
| भ्रूभेदे सहसोद्गतेऽपि वदनं | ३७ | रत्नावली० २।४६, स० क० ११०२ |
| भ्रू मुर्वैवल्गुर्ननृतुर्जजक्षुः | ५० | भट्टि० का०, १३।२८ शृ० प्र०, २यः प्रकाशः, पृ० १०४ |
| (म) | | |
| मकरे दशभागावाः | १५७ | |
| मत्स्यमत्स्यन्दिको मत्स्य० | ४२ | |
| मथ्नामि कौरवशतम् | १२३ | वे० सं० १।१५, का० मी०; अ०प्र०; द० रू०; १मः प्रकाशः |
| मदरक्तकपोलानि | १५२ | |
| मदिराक्षि मदाननार्पितं | ७९ | र० व० ८।६४ |
| मधुमन्ति सुगन्धीनि | १४० | |
| मधु सरजसं मध्ये० | १५५ | |
| मधुर्मधूनि गान्धर्वं | ४२ | स० क० २।१८१ |
| मध्यन्दिनार्कसन्तप्त० | ५४ | काव्याद० २।२२२ |
| मनीषिताः सन्ति गृहेषु देवताः | ३१ | कु०स० ५।४, स० क० २।२५; शृ०प्र०, १०मः प्रकाशः, पृ० ३७२, मैसूरप्रकाशनम् १९५६ |
| मनोरोगस्तीव्रो | ६८ | मा० मा० २।१ |
| मन्दं निधेहि चरणे | ७ | |
| मन्दरस्य मदिराक्षि पार्श्वतो | १५४ | वा० का० सू० वृ० ५।२ |
| मन्दायन्ते न खलु सुहृदाम् | १४६ | |
| मरकततटे मन्दाकिन्या | १२८ | |
| मलयमरुतां व्राता याता | १२३ | सु०र०भा०, पृ० २८३, श्लो० १५३ अर्जुनवर्मदेवस्य |
| मल्लिकामालभारिण्यः | ११७ | काव्याद० २।२१५, स०क० ४।२२२, सु० र० भा०, पृ० २९८, श्लो० २ |
| मा गर्वमुद्वह कपोलतले चकास्ति | ३८ | दशरूपकम्, २यःप्र०, स० क० ११०५, सु०र०भा०, पृ० ३५५, श्लो० २ |
| माघमासे रटन्त्यापः | १२५ | |

( य )

(र)

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| विहाय वेश्मानि शुचीनि यस्यां | १०३ | |
| वृत्तं कुङ्कुमपङ्कपाटलरुचि | ४८ | |
| वैदग्ध्यादपि मुग्धिमा | १५५ | |
| व्यर्थं यत्र कपीन्द्रसख्यमपि मे | ८० | उ० रा० च० ३।४५, स० क० ५।५८ |
| व्याधाः पापधियस्तथापि भवते | ११८ | |
| व्यामग्राह्यस्तनीभिः | १६२ | |
| व्रीहिः स्तम्बकरिः | १६५ | शृ० प्र०, १४ दशः प्र०, पृ० ५०२ |
| ( श ) | | |
| शकगुर्वतिकपोलापाण्डुना | १६३ | |
| शयन्त्येतस्य वक्त्रस्य | ५५ | |
| शयितमसकृद् गर्भागारे | ४४ | |
| शशिनमुपगतेयं कौमुदी | १७१ | |
| शशिरुचिषु दलेषु नागवल्ल्या | १०५ | |
| शान्त्यै वोऽस्तु कपालदाम जगतां | १२८ | स० क० ४।१२६ |
| शापान्तो मे भुजगशयनाद् | ७३ | मे०दू० २।४७ [११५] स०क० २।२७, ५।१९४, ५।२७८ |
| शार्वरस्य तमसो निषिद्धये | १५५ | कु० स० ८।५८ |
| शिखरिणि क्वनु नाम | ११९ | ध्वन्या० प्र० उ०, श्लो० १३, सु० र० भा०, पृ० ३१३, श्लो० ४२, सुभाषिता० २०३० |
| शिरसि सुषिरे | ८७ | बोधायनकवेः, भगवदज्जुकीयम् |
| शिशिरसीकर० | १५० | |
| शुचौ तप्ताङ्गीनां | १६६ | |
| शुभे कोऽयं वृद्धः | ११८ | स० क० १।११६ |
| शून्यग्रामटिकोपकण्ठरचित० | ९१ | |
| शृङ्गाणि द्रुतकनको | १७१ | शि० व० ८।३०, शृ० प्र०, १४ दशः प्र०, पृ० ४८८ |
| शृङ्गारी गिरिजानने | १०२ | शृङ्गारतिलकम् १ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| शैलः सोऽयं ककुभसुरभिः | १२० | उ० रा० च० १।३३ |
| शैलाधिराजतनया | ४५ | कु० स० ५।८५, स०क० ५०, दशरू० ४र्थः प्रकाशः |
| श्रियः पतिः श्रीमति | ४९ | शि०व० १।१, का० मी०, ६मोऽध्यायः शृ० प्र०, २यः प्र०, पृ० १०९ |
| श्रुतिमधुरया वाचा | १२७ | |
| श्रुत्वा यं सहसागतं निजपुरात् | ३२ | स० क० १।८३ |
| श्लाघ्यो दृष्टिर्दुहितरि गिरे | १५१ | |
| ( ष ) | | |
| षड् द्रव्यान् षड्रसैर्युक्तान् | १५८ | |
| ( स ) | | |
| संरम्भः करिकीटमेघसकलो० | १६ | व० जी० १।२७ |
| स एष भुवनत्रय० | ९२ | शृ० प्र० १०मः प्र, पृ० ३७१ मे० प्र० १६५६ |
| स करः करिवक्त्रस्य | ४५ | |
| सकुण्डलं सकवचं | १२३ | |
| सक्तुमिव तितउना | १८६ | ऋ० सं० |
| सङ्कुलमिति स | १४० | |
| सङ्ग्रामाङ्गणसङ्गतेन भवता | १२१ | स० क० ४।२०६, सदुक्तिकर्णामृतम्, खण्डप्रशस्तिः |
| सत्त्वभ्रंशविषादिभिः कथमपि | ९२ | सु० र० भा०, पृ० ३६५, श्लो० ५ |
| सद्यः पुरीपरिसरेषु | २०, ३७ | व० जी० १।३२, बा०रा० ६।३४, स० क० ३।१०२, महाना० ३।१५ |
| सद्यो द्रावितकेतकोदरदल० | ६० | स० क० २।५६ |
| सद्यो मार्जितदाक्षिणात्यतरुणी० | १६२ | बालरा० १०।४१ |
| सन्निधौ नलिनं शीत० | ५५ | |
| स पल्वलोत्तीर्णवराहयूथा० | १४६ | र० व० २।१७ |
| स पातु वः पुष्पवन्तौ | ५ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| स्कन्धे विन्ध्याद्रिबुद्ध्या | १४६ | |
| स्खलयति वचनानि | ६९ | मा० मा० ३।८, स० क० ५।५९ |
| स्तनयोस्तरुणीजनस्य | १४९ | वा० का० सू० वृ० ५।१।१० |
| स्त्रीणां चक्षुः | १४६ | " " " " |
| स्त्रीणां तथा पल्लवकोमलेषु | ८३ | |
| स्त्रीपुरुषमनघं | ४५ | |
| स्थितमुरसि विशालं | ६८ | रत्नावली २।१३९, स०क० ५।५५ |
| स्थिताः क्षणं पक्ष्मसु ताडिताधराः | २१ | कु० स० ५।२४, स० क० १।७८ |
| स्नानस्निग्धाङ्गनारी० | १६२ | |
| स्निग्धैर्मयूरवर्णैः | १४२ | |
| स्फुरति बहुशो बाहुः | १३८ | |
| स्मितं किञ्चिद् वक्त्रे | १२६ | शृङ्गा० शत० ६, सु० र० भा०, पृ० २५५, २१ श्लो० |
| स्मृतं किञ्चिन्मुग्धं | ११६ | ध्वन्या० ४र्थ उ०, सुभाषितावलिः २२३६ |
| स्वचरणविनिविष्टैः | ३३ | वा० का० सू० वृ० ३।१।१६ |
| स्वपिति यावदयं निकटे जनः | ३८ | वा०का० सू०वृ० ३।२।१३ |
| स्वरार्थं चार्यार्थं | १५७ | |
| स्वादुस्वच्छन्द०.... | १४६ | |
| ( ह ) | | |
| हठारितं महाराष्ट्रे | १६३ | |
| हन्यते सा वरारोहा | १४३ | काव्याद० ३।१३८ स० क० १।१५६, ५।४५७ |
| हरति हलिकयोषित् | ६१ | |
| हरस्तु किञ्चित् परिवृत्तधैर्यः | ६६, ६५ | कु० स० ३।६७, का० मी०, ४र्थोऽध्यायः दशरू० २यः प्र०, स० क० ५।१ |
| हलधरपरिधानश्यामलैरम्बुवाहैः | १४२ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| हा तातेति क्रन्दितम् | ३९ | र० व० ६।७५ |
| हारोऽपि नार्पितः कण्ठे | ८० | महाना० ४।२५, सुभाषितावली वाल्मीकेरुल्लेखः |
| हासस्मितं मुखं वेत्सि | ९१ | |
| हृतोष्ठरागैर्नयनोदबिन्दुभिः | १५४ | विक्र० व० ४।७, वा० का० सू० वृ० ५।२।१९, ध्व० प्र० ७मः प्र० पृ० १२५ |
| हृदयान्नापयातोऽसि | ८५ | महाना० ३।२४, स०कं० ५।१८ |



## परिशिष्टम्–३

# उद्धृतप्राकृतगाथानुक्रमणी

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ( अ ) | | |
| अणिअदनुए उण पिए मुद्धा | १४५ | |
| अणेण पिआत्थणए | १६६ | |
| अण्णेविहि होन्ति चणणाण | १६६ | स० क० ५।३१५ |
| अत्ता तह रमणिज्जह्मं | ७ | गा० स० श० ८ |
| अद्दंसणेण पेम्मं अवेइ | १७८ | गा० स०श० ८१, स०क० ५।३२८ |
| अद्धक्खरूसणक्खण॰सजण्ण॰ | ७४ | गा० स०श० ७।७५, स० क० ५।१७८ |
| अन्दोलनलंघिअवअसिहाए | १६६ | स० क० ५।३०१ |
| अलअं जणंति दकहूकत्थरस्स॰ | ११२ | |
| अविअण्णपेच्चणिज्जेण | ७४ | गा०स०श० ६२, शृ० प्र० ४१५ |
| अह तइ महत्थदिण्णोकह | ११९ | स० क० ५।२१४ |
| अहमरुहुकुडे को अ संच | १०९ | |
| (आ) | | |
| आ अं बले अणाणय्यो॰ | १६५ | गा० श० ५७३ |
| आदिअं अणएण गच्छसि | ६ | काव्या० पृ० ५४, १६ |
| आम बहुला वनाली मुहुला | ११६ | |
| आवणइ परिअत्तिद अडेवेणं | १७७ | |
| ( इ ) | | |
| इमा मसीकज्जलकालकालकाआ | १७१ | |
| इमिणा सरएण ससी | १२१ | स० क० ४।२०५ |
| इवणदलअपहुजजद्ध॰ | १७५ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ( उ ) | | |
| उच्चासणो मकिर ·· | ७७ | |
| उच्चिण सुपडिअ कुसुमं | ७ | गा० स० श० ६५२, ध्व० लो० २ उ०, पृ० ६४३ मोती० बना० प्र०, १९७२ |
| उव णिच्चलणिप्फन्दा | ६ | गा० स० श० ४ |
| ( ए ) | | |
| एक्तो रुअइ पिआ | १११ | गा० स० श० ९१, ध्वन्या० ३, द० रू०, ४र्थः प्रकाश |
| एत्तो वि ण सच्चविओ गोसे | ११७ | स० क० ३।१२६ |
| एत्थ णिसज्जइ अत्था | ६ | गा० स० श० ६६७, ध्व० लो०, प्र० उ०, पृ० ११९ मोतीलाल-बनारसीदासप्रकाशनम्, १९७३ |
| एद्दहमेत्तत्थणिआ | १३४ | गा०स०श० ९७३, स० क० ३।-२ |
| ( क ) | | |
| कणं कण्णकामो धगुव्वहइ···· | १६५ | |
| कलहो उज्जल्गी असि | १-२ | शृ० प्र०, पृ० ५६, श्लो० १५ |
| कस्स वण होइ रोसो | ६१ | गा०स०श० ८८६ |
| कापि पारिटकरालडुक्क | १७२ | |
| को एसोत्ति पउतेसामली | १७२ | स० क० ५।३०२ |
| कोदुक्क अजणग्गमवेसा | १७१ | |
| ( ग ) | | |
| गण्हन्ति पिय अमापि अ | १७३ | गा० स०श० ९५२ |
| गिम्हदवग्गिमसीमइलिआइ | ७५ | गा० स० श० १।७० स० क० ४।८०, ५।४०४ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ( घ ) | | |
| घरणिए महाणसकम्म० | ११२ | गा०श० १३, स०क० ४।६१, ५।३८२ |
| घरिणिघरत्थणपेल्लण० | ६९ | गा० स० श० ६१, स०क० ५।६२ |
| घेत्तूणचुण्णमुट्ठी | १६९ | |
| ( च ) | | |
| चिन्तामणि अदइअसमा | ६३ | गा०स०श० ६०, स० क० ५।३५ |
| ( छ ) | | |
| छणपिट्ठधूसरत्थणि | १७० | स० क० ३।०, ५।३०० |
| छम्मइ पिआए दइओ | १७२ | |
| ( ज ) | | |
| जस्स विलक्खगं तिणहं | १४१ | से० ब० १।७ |
| जिजीपुउएमिदिसपुरलालि | १२१ | |
| जो जस्स हिअअदइओ | १२० | स० क० ४।१६१ |
| ( ण ) | | |
| ण कओ बाहविमक्खो | ६७ | रावणवहो ११।५९ |
| णच्चिहिइ णडो पेच्चिहिइ | १७५ | स० क० ५।३११ |
| णमह अवड्ढिअतुङ्गं | ५७ | से० ब० ११। |
| णवलअपरसं अंगे जहिं | १७५ | गा० स० श० २८, स० क० ५।३०८ |
| णिअए वि कुग्गअंणे | ११२ | |
| णि अदह दंसणक्खित० | ७ | गा० स०श० ३५७, काव्या० ५५।१९, स० क० ५।३७५ |
| णिभुवं खुणं ससिजइ० | ८२ | |
| ( त ) | | |
| तह णिमिअच्चिअ दिट्ठी | ६७ | से० ब० ११।६४ |
| तुंसि मए चूअंकुर | १०८, १७० | अभि० शा० ६।२, स० क० २।५ |
| तुज्झ ण आणे हिअअं | १०८ | अभि० शा० ३।१३, स० क० २।२ |
| तुह करकमलं कमलं | १३३ | |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ते विरला सप्पुरुसा | १२० | गा० स०श० ११३, से०ब० ३।१०, स० क० ४।१६२ |
| **( थ )** | | |
| थोआरूढमहुमआ खणप्पं | १७६ | स० क० ५।२२१ |
| **( द )** | | |
| दिअरस्ससरअमहुरं | १७१ | स० क० ५।३१७ |
| दूरपडिवद्धराए | १२६ | स० क० ४।८६ |
| देआ पहिअ णि अत्तसु | ६ | गा०स०श० ९६८, ध्व० लो०, प्र० उ०, पृ० १२३, मोती० बना० प्र०, १९७२ |
| **( ध )** | | |
| धण्णो सि रे हलिद्दहद्दलि | १७३ | गा०, श० ८६३ |
| धीरेण समं जामा | १२० | से०ब० ५.१७, स०क० ४।१२२ |
| **( प )** | | |
| पग्गुप्पच्छणणंदो सक्केण वि | १७० | |
| पणमथ पणअपकुपिता | १०८ | स० क० २।४ |
| पणमाणहम।णस्सहला | ८२ | गा० स० श० ८९२ |
| परिपुच्छआ ण जप्पइ | ७४ | गा० स० श० ६१७ |
| प···साग अण वसत्तरा | १३२ | |
| पाअडिअणेहसब्भावविब्भमं | ६१ | |
| पाणउडीअवि जलिअण | ६२ | गा० स० श० १९९ |
| पाणसमो त्ति भणंतो | ११२ | |
| पिअदंसणसुहरसमेउलिआइ | ७ | गा० स० श० ३२३, स० क० ३।१२७ |
| पिअदंसणसुहरसमेउलिआइ | ११७ | गा० स०श० ३२३ |
| पिसुणत्ति कामिणीणं | १७५ | गा० स०श० ५५८ |
| पुढमं वामणविहिणा | १८१ | स० क० ५।३१८ |

| श्लो० | पृ० | ग्रन्थः |
|---|---|---|
| ( स ) | | |
| संदीक्षीराणणेहेवहि | १७८ | |
| सम्मं अपारिजाअं | १७८ | से० ब० ४।२०, स० कं० ३।१५७ |
| सच्चं चिअकट्ठमणो | १७५ | गा० स० श० ८५८, मू० प्र०, ७मः प्रकाशः, पृ० २२६ |
| सच्चं वोलन्ति जणा | १२१ | |
| सणिअं वच्चकिसोअरिमा० | ७ | |
| सहृदयण्णणो जतइ | १८० | |
| सातुग्वज्झण-बालअणिच्चं | १८१ | |
| सालोअच्चिअ सूरे घरिणी | १२७ | गा० स० श० १२९, स० कं० ३।१२९ |
| सीकरिअमणिअमुहवेविआइ | ६ | गा० स० श० ३९२ |
| सेवन्ति तीरवड्ढं | १४० | से० ब० १।६१ |
| ( ह | | |
| हं तक्खो राआहं | १४५ | |
| हत्थि पुट्ठेण हि शुद्धं | ११७ | |
| हद्दे हिमं सन्धमिऊण बाला | १७१ | |



## परिशिष्टम्-४

# उद्धृतनामपूर्णानां श्लोकानां पूरणम्

सा० मी० पृ० १ "यत्तालीदलपाकपाण्डुवदनम्"

यत्तालीदलपाकपाण्डुवदनं यद् दुर्दिनं नेत्रयो-
र्यत्प्रेङ्खोलितकेलिपङ्कजदलं श्वासाः प्रसर्पन्ति च ।
गौरी कुप्यतु वर्तते यदि न ते तत् कोऽपि चित्ते युवा
धिग् धिक् त्वां खलु पांसुलेखनसखीलोकेऽपि यन्निह्नवः ॥

(विद्धशा० भ० २।१४)

सा० मी० पृ० ३ "इयं गेहे लक्ष्मीः"

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

(उ० रा० च० १।३८)

(म० मा० ४।२७)

सा० मी०, पृ० ५ "स्वात्मेन्दुवह्निमरुदर्कमहीपयांसि
यन्मूर्तयः स भगवानभिरक्षतु त्वाम् ।"

स्वात्मेन्दुवह्निमरुदर्कमहीपयोभि-
रष्टाभिरेव तनुभिर्भवता समस्ते ।
ग्रस्ते जगत्यपरमिच्छति योऽत्र वस्तु
कोऽन्यो हतत्रपतया सदृशोऽस्ति तेन ॥

( शृ० प्र०, ९मः प्रकाशः, पृ० ३१०,
मैसूर-प्रकाशनम्, १९६३ )

सा० मी० पृ० ५ "या सृष्टिः स्रष्टुराद्या"

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

(अभि० शा० १।१)

सा० मी० पृ० १९ "भर्तुर्मित्रं प्रियमविधवे विद्धिमामम्बुवाहम्"

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशाद्धृदयनिहितादागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबला - वेणिमोक्षोत्सुकानि ॥

(मे० दू० ५६)

सा० मी० पृ० २५ 'एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥"

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

(कु० स० १।३)

सा० मी० पृ० २६ 'तं पातयां प्रथममास पपात पश्चात्"

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात् ॥

(रघु० महा० ९।६१)

सा० मी० पृ० २६ "प्रभ्रंशयां यो नहुषं चकार"

भ्रूभेदमात्रेण पदान्मघोनः
प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भःपरिशुद्धिहेतो-
र्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥

(रघु० महा० १३।३६)

सा० मी०, पृ० ३८ "सरसिजमनुविद्धं शैवलेन"

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

(अभि० शा० १।१८)

सा० मी०, पृ० ३० 'कोकिलालापवाचालो मामेति मलयानिल:"

कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्झराम्भः कणोक्षितः ॥

(स० क० १।४२ २।२८६)

सा० मी०, पृ० ३८ "स्वपिति यावदयं विकटे जनः····।"

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनु मेखलं मम करं स्वकरेण रुरोध सा ॥

(वा० का० सू० वृ० ३।२।१४)

सा० मी०, पृ० ४२ "तत्र तोयाशयाशेष······।"

तत्र तोयाशयाशेषव्याकोशितकुशेशया ।
चकाशे शालिकिंशारुकपिशाशामुखा शरत् ॥

( उ० का० सा० स० १।३ )

सा० मी०, पृ० ४३ "सान्द्रारविन्द० ।"

सान्द्रारविन्दवृन्दोत्थमकरन्दाम्बुबिन्दुभिः ।
स्यन्दिभिः सुन्दरस्यन्दं नन्दितेन्दिन्दिरा क्वचित् ॥

( उ० का० सा० स० १।४ )

सा० मी०, पृ० ४३ "केलिलोलालिमालानां ।"

केलिलोलालिमालानां कलैः कोलाहलैः क्वचित् ।
कुर्वती काननारूढश्रीनूपुररवभ्रमम् ॥[1]

( उ० का० सा० स० १।५ )

१. एतत् [?] वयमुदाहरणत्वेनोद्धृतम् उ० का० सा० सङ्ग्रहे किन्वत्र कारिकापाठे निक्षिप्तम् ।

सा० मी०, पृ० ४५ "स्त्रीपुंसमनघं नित्यमानतोऽस्मि"

स्त्रीपुंनपुंसमनघ मवमानतोऽस्मि
शैलाधिराजतनया न ययौ न तस्थौ।
साश्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्तां
पायादेकं मदनविजयद्वेविणस्तद्वपुर्वः॥

( शृ० प्र०, १०मः प्र०, पृ० ३७८ )

सा० मी०, पृ० ४५ "शैलाधिराजतनया ......।"

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥

( कु० स० ५।८५ )

सा० मी०, पृ० ४९ "उद्दामोत्कलिकाम्"

उद्दामोत्कलिकां विपाण्डुररुचं प्रारम्भजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्॥

( रत्नावली २।४ )

सा० मी०, पृ० "श्रियः पतिः श्रीमति"

श्रियः पतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि।
वसन् ददर्शावतरन्तमम्बरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः॥

( शिशु० व० १।१ )

सा० मी० पृ० ४९ "द्वारं खड्गिभिरावृतम्"

द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः॥

( शृ० प्र०, ६मः प्र०, पृ० ११८ )

सा॰ मी॰ पृ॰ ५॰ "भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः ··· ।"

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः ।
आस्फोटयाञ्चक्रुरभिप्रणेदू रेजुर्ननन्दुर्वियुस्समीयुः ॥

( भट्टि॰ १३।२८ )

सा॰ मी॰, पृ॰ 'तस्मिन् जीवति ··· '

सोऽस्मिन् जयति जीवातुः पञ्चेषोः पञ्चमध्वनिः ।
ते च चैत्रे विकीर्णे वा तवकोलीकेलयोऽनिलाः ॥

( स्मृ॰ प्र॰, ३यः प्र॰, पृ॰ १०४ )

सा॰ मी, पृ॰ 'विकसन्ति कदम्बानि ।"

विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः ।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥

( काव्याद॰ २।११७ )

सा॰ मी, पृ॰ 'कियन्मात्रं जलं विप्र'

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते नहि सर्वे भवादृशाः ॥

( स॰ क॰ १।१६८ )

सा॰ मी॰, पृ॰ ५॰ "अथ यन्तारमादिश्य"

अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥

( र॰ वं॰ १।५४ )

सा॰ मी॰, पृ॰ ५॰ 'तदाभ्यात ।'

ततः प्रभृति निःसङ्गो नागकुञ्जरकृत्तिभित् ।
शितिकण्ठः कालगलस्सतीशोकानलव्यथः ॥

( उ॰ का॰ सा॰ स॰ ३।१ )

सा॰ मी॰, पृ॰ ५१ "त्वदाननमधीराक्षमाविर्दशनदीधिति"

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भ्रमरमालक्ष्य केसरं भाति पङ्कजम् ॥

( काव्याद॰ २।४४ )

सा० मी०, पृ० ५१ 'नलिन्या इव तन्वङ्ग्याः'

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायं पायमरम्यत ॥

( काव्याद० २।४५ )

सा० मी०, पृ० ५४ 'मध्यन्दिनार्कसन्तप्तः'

मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः ।
मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः ॥

( काव्याद० २।२२३ )

सा० मी० पृ० ५४ 'लिम्पतीव तमोऽङ्गानि'

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥

( मृच्छकटिकम् १।३२ )

सा० मी०, पृ० ५४ "लिम्पतीव ..... "

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥

( काव्याद० २।२२६ )

सा० मी०, पृ० ५६ "अरत्नालोकसंहार्यम्"

अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥

( काव्याद० २।१९७ )

सा० मी०, पृ० ५६ "अपीतक्षीबकादम्बम्"

अपीतक्षीबकादम्बमसंस्पृष्टामलाम्बरम् ।
अप्रसारितशुद्धाम्बु जगदासीन्मनोहरम् ॥

( काव्याद० २।२०० )

सा० मी०, पृ० ५६ "असम्भृतं मण्डनमङ्गयष्टेः"

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथवयः प्रपेदे ॥

( कु० स० १।३१ )

सा० मी०, पृ० ६१ "न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामपि"

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।
न पञ्चेषुः स्मरस्तस्य स स्रं पत्रिणामिति ॥

( काव्याद० २।३०४ )

सा० मी०, पृ० ६२ 'सह दीर्घा मम श्वासैः ...'

सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥

( काव्याद० २।२५२ )

सा० मी०, पृ० ६६ 'लीनेव प्रतिबिम्बितेव ... ।'

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥

( मा० मा० ५।१० )

सा० मी०, पृ० ६६ "उत्कृत्योत्कृत्य कृत्तिं ..."

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

( मा० मा० ५।१६ )

सा० मी०, पृ० ६६ "हरस्तु किञ्चित् परिवृत्तधैर्यः"

हरस्तु किञ्चित् परिवृत्तधैर्य-
श्चन्द्रोदयारम्भमिवाम्बुराशिः ।
उमा मुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥

( कु० स० ३।६७ )

सा० मी०, पृ० ६८ "आवर्जितजटामौलि० "

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुङ्कारशंसिनः ॥

( कु० स० २।२६ )

सा० मी०, पृ० ६८ 'अस्मान् साधु विचिन्त्य "

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्यां कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥
अभि० शा० ४।१७ )

सा० मी०, पृ० ६६ 'प्राप्य मन्मथरसादतिभूमिम्'

प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥
( शिशु० व० १०।८० )

सा० मी०, पृ० ६९ 'कश्चित् कराभ्यामुपगूढनालम्"

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥
( र० व० ६।१३ )

सा० मी०, पृ० ७० 'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः"

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेप एव पदमुद्धृतमर्पयन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥
( कु० स० ५।८५ )

सा० मी०, पृ० ७० 'यान्त्या मुहुर्वलितकन्धरमाननं तद्"

यान्त्या मुहुर्वलितकन्धरमाननं तद्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥
( मा० मा० १।३२ )

सा० मी०, पृ० ७३ "आशाबन्धः कुसुमसदृशप्राणमपि"

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥

( मे० दू० १।१० )

सा० मी०, पृ० ७३ "शापान्तो मे भुजगशयानादुत्थिते शार्ङ्गपाणौ"

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

( मे० दू० २।४७ )

सा० मी०, पृ० ७३ "अदृष्टे दर्शनोत्कण्ठा"

अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता ।
नादृष्टे न च दृष्टेन भवता विद्यते सुखम् ॥

( सु० र० भा०, पृ० २६१ श्लो० १ )

सा० मी०, पृ० ७३ "तत्कालप्रियजनविप्रयोगजन्मा"

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥

( उ० रा० ३।३० )

सा० मी०, पृ० ७६ "किं पद्मान्तर्भ्रान्तालि"

किं पद्मान्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तं पश्यतस्त्वां घनस्तनीम् ॥

( काव्याद० २।२६ )

सा० मी०, पृ० ७६ "सरोजपत्रे परिनीलषट्पदे ⋯ "

सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्विन्नतपक्ष्मसन्ततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥

( किरातार्जुनीयम् ८।३५ )

सा॰ मी॰, पृ॰ ७६ "अङ्गुलीभिरिव केशसञ्चयम्"

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥
(कु॰ स॰ ८।६३)

सा॰ मी॰, पृ॰ ८२ 'विललाप स बाष्पगद्गदं ।"

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥
(र॰ वं॰ ८।४३)

सा॰ मी॰, पृ॰ १०२ "शृङ्गारी गिरिजानने"

शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणीति भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दनेन हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसाश्रयः पशुपतिर्भूयात् सतां भूतये॥
(शृङ्गा॰ तिल॰ १)

सा॰ मी॰, पृ॰ १०८ 'उन्नमितैकभ्रूलतम्"

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन॥
(अभि॰ शाकु॰ ३।१२)

सा॰ मी॰, पृ॰ १११ 'कपोले जानक्या'

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोल्लसति पुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः॥
(महाना॰ ३।५०)

सा॰ मी॰, पृ॰ ११२ "अन्त्रैः कल्पितमङ्गल॰"

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः॥
(मा॰ मा॰ ५।१८)

सा० मी०, पृ० ११४ "मृतेति प्रेत्य सङ्गन्तुम्"

मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम्।
सैवा तन्वी मया लब्धा कथमत्रैव जन्मनि॥

( काव्याद० २।२८० )

सा० मी०, पृ० ११९ "गच्छ गच्छसि चेत् कान्त"

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥

( काव्याद० २।१४१ )

सा० मी०, पृ० ११६ शिखरिणि क्वनु नाम"

शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत् तपः।
सुमुखि येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः॥

( सुभाषितावलिः, श्लो० २०३० )

सा० मी०, पृ० १२० "ते विरला सप्पुरुसा"

ते विरला सप्पुरिसा ये अभणन्ता घडेन्ति कज्जालावे।
थोअ च्चिअ ते वि दुमा ये अमुणिअकुसुमणिग्गमा देन्ति फलं॥

( रावणवहो ३।१० )

सा० मी०, पृ० १२१ 'अद्यैवावां रणमुपगतौ"

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
स्पृष्टस्ताभ्यां शिरसि विनतोऽहं च दुश्शासनश्च।
तस्मिन् काले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा॥

( वे० स० ४।१५ )

सा० मी०, पृ० १२१ "केचिद् वस्तुनी"

केचिद् वस्तुनि नो वाचि केचिद् वाचि न वस्तुनि।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि॥

( स० क० १।९३ )

सा० मी०, पृ० १२२ "लोचने निमीलयित्वा"

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥
( सं० कं० २।३७ )

सा० मी०, पृ० १२३ "त्वं जीवितम्"

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥
( उ० रा० ३।२७ )

सा० मी०, पृ० १२३ "मथ्नामि कौरवशतम्"

मथ्नामि कौरवशतं समरे न कोपाद्
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥
( वे० सं० १।१५ )

सा० मी०, पृ० १२३ "मलयमरुतां व्राता याताः"

मलयमरुतां व्राता याता विकासितमल्लिकाः
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटयितुं तं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनञ्जयः ॥
( अर्जुनवर्मदेवस्य १–सु० र० भा० पृ० २८१, श्लो० १५३ )

सा० मी०, पृ० १२६ "स्मितं किञ्चिद् वक्त्रे ..."

स्मितं किञ्चिद् वक्त्रे ललितमधुरो दृष्टिविभवः
परिष्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः ॥
( शृङ्गा० शत० ६ )

सा॰ मी॰, पृ॰ १२८ "निश्शेषच्युत॰"

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥

(अम॰ शत॰ ६०)

सा॰ मी॰, पृ॰ १३० 'शैलः सोऽयं ककुभसुरभिः'

सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः।
वत्सैतस्माद् विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः॥

(उ॰ रा॰ च॰ १।३३)

सा॰ मी॰, पृ॰ १३० "पत्युः शिरश्चन्द्रकलामनेन"

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान॥

(कु॰ स॰ ७।१९)

सा॰ मी॰, पृ॰ १३१ "चूडाचुम्बितकङ्कपत्रम्"

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः॥

(उ॰ रा॰ च॰ ४।२०; महा॰ च॰ १।१८; म॰ ना॰ २।२)

सा॰ मी॰, पृ॰ १३२ "कश्चित् कान्ताविरहगुरुणा"

कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु॥

(मे॰ दू॰ १)

सा० मी०, पृ० १३३ "रामोऽस्मि सर्वं सहे"

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ।।

( म० ना० ५।७ )

सा० मी०, पृ० १३३ रामोऽसौ भुवनेषु विक्रमगुणैः ''''।"

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद् यदि पुनर्देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ।।

( म० ना० ६।४० )

सा० मी०, पृ० १३४ "मैथिली तस्य दाराः"

श्रृणुत जनकशुल्कं क्षत्रियाः सर्वं एते
दशवदनभुजानां कुण्ठिता यत्र शक्तिः ।
नमयति धनुरैशं यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः ।।

( बालरामायणम् ३।२७ )

सा० मी०, पृ० १३४ "फुल्लेन्दीवरकाननानि "

फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरा-
स्तन्वीयं जघनस्थलीरपुलिना रोमावली निम्नगा ।
प्रत्यङ्गेषु नवैव सम्प्रति शरल्लक्ष्मीरियं दृश्यते
तच्चिह्नैरधुना प्रसाधनविधौ बद्धो वृथैवादरः ।।

( ताप० वत्स० ३।१६ )

सा० मी०, पृ० १३४ "उपस्थितां पूर्वमपास्य लक्ष्मीम्"

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात् सोढास्मि न त्वद्भवने वसन्ती ।।

( र० वं० १४।६३ )

सा० मी०, पृ० १३६ "लीनेव प्रतिबिम्बिता"

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया॥

(मा० मा० ५।१०)

सा० मी०, पृ० १३६ 'अङ्केन्यस्योत्तमाङ्गं प्लवगकुलपतेः'

विस्रम्भादुत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम्।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात् तीक्ष्णमक्ष्णोः
कोणेनोद्वीक्षमाणस्त्वदनुजवदने दत्तकर्णोऽयमास्ते॥

(अभिन० भार०, ना० शा० १६।६)

सा० मी०, पृ० १३६ "मेदश्छेदकृशोदरं लघु ..."

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

(अभिन० भार०, ना० शा० १६।७)

सा० मी०, पृ० १४० "क्रान्तं रुचा काञ्चनवप्रभाजा"

क्रान्तं रुचा काञ्चनवप्रभाजा
नवप्रभाजालभृतां मणीनाम्।
श्रितं शिलाश्यामलताभिरामं
लताभिरामन्त्रितषट्पदाभिः॥

(शिशु० व० ४।२)

सा० मी०, पृ० १४१ "यशःस्तोमानुच्चै............भ्रमकरान्।

अपि त्वत्तेजोभिस्तमसि शमिते रक्षति निशा-
मसौ यात्रामैत्री नभसि नितरामम्बरमणिः॥
इति तृतीयचतुर्थचरणौ

(सु० र० भा०, पृ० १०६, श्लो० १५७)

सा० मी०, पृ० १४४ "विवृण्वती शैलसुतापि भाव ।"

विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ॥

( कु० स० ३।६८ )

सा० मी०, पृ० १४५ "पर्याप्तं तप्तचामीकरकटकतटे ...."

पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशा-
वासीदत्स्यन्दनाश्वानुकृतमरकते पद्मरागायमाणः ।
यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरोः
एनांस्यह्नाय दूरं शमयतु स गुरुः काद्रवेयद्विषो वः ॥

( सूर्यशतकम् ५६ )

सा० मी०, पृ० १४६ "जम्भारातीभकुम्भोद्भवमिव दधते"

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥

( सूर्यशतकम् १ )

सा० मी०, पृ० १४६ "पादाग्रस्थितया ...."

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।
ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन् कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥

( रत्नावली० १।१ )

सा० मी, पृ० १४६ "स पल्वलोत्तीर्णवराहयूथानि"

स पल्वलोत्तीर्णवराहयूथा-
न्यावास-वृक्षोन्मुख-बर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन् ॥

( र० वं० २।१७ )

सा० मी, पृ० १४७ 'लभेत सिकतासु तैलमपि "

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः।
कदाचिदपि पर्यटञ्छशविषाणमासादयेन्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥

( नीतिशतकम् ५ )

सा० मी०, पृ० १४७ "बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्र"

बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्र-
श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः।
श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री-
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥

( शिशु० व० ४।३८ )

सा० मी०, पृ० १४८ "न नर्मसाचिव्यमकारि नेन्दुना"

कलासमग्रेण गृहानमुञ्चता
मनस्विनीरुत्कयितुं पटीयसा।
विलासिनस्तस्य वितन्वता रतिं
न नर्मसाचिव्यमकारि नेन्दुना ॥

( शिशु० व० १।५९ )

सा० मी०, पृ० १४८ 'निधानगर्भामिव — "

निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम्।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥

( र० व० ३।९ )

सा० मी०, पृ० १५२ 'पक्ष्मालीपिङ्गलिम्नः कणलवः'

पक्ष्मालीपिङ्गलिम्नः कणलव इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव।
अर्चिर्निष्टप्तचूडाशशिगलितसुधाघोरझाङ्कारिकोणं
तार्तीयं यत् पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥

( सु० र० भा०, पृ० ९, श्लो० १४२ )

सा॰ मी॰, पृ॰ १५२ "तमृषिं मनुष्यलोक॰ ··· ।"

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ।
सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥

( वाल्मीकेः-सु॰ र॰ भा॰, पृ॰ ३९ श्लो॰ ४६ )

सा॰ मी॰, पृ॰ १५२ 'विरामः शर्वर्याः'

विरामः शर्वर्या हिमरुचिरवाप्तोऽस्तशिखरं
किमद्यापि स्वापस्तव मुकुलिताम्भोरुहदृशः ।
इतीवायं भानुः प्रमदवनपर्यन्तसरसीं
करेणाताम्रेण प्रहरति विबोधाय तरुणः ॥

( जानकीहरणम् ३।७८ )

सा॰ मी॰, पृ॰ १५३ 'हृतोष्ठरागैर्नयनोदबिन्दुभि ·······'

हृतोष्ठरागैर्नयनोदबिन्दुभि-
र्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥

( विक्र॰ वशी॰ ४।७ )

सा॰ मी॰, पृ॰ १५५ "शार्वरस्य तमसो निसिद्धये"

नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पूर्वदिङ्मुखं केतकैरिव रजोभिराहृतम् ॥

( कु॰ स॰ ८।५८ )

सा॰ मी॰, पृ॰ १५५ "रात्रिवृत्तमनुयोक्तुमुद्यता"

रात्रिवृत्तमनुयोक्तुमुद्यतं सा प्रभातसमये सखीजनम् ।
नाकरोदपकुतूहलं ह्रिया शंसितुं तु हृदयेन तत्परे ॥

( कु॰ स॰ ८।१० )

सा॰ मी॰, पृ॰ १५७ 'प्रदीयतां दाशरथाय मैथिली'

त्यज प्रकोपं कुलकीर्तिनाशनं
भजस्व रामं कुलकीर्तिवर्धनम् ।
अलं विरोधेन शमो विधीयतां
प्रदीयतां दाशरथाय मैथिली ॥

( म॰ ना॰ ६।२३ )

सा० मी०, पृ० १५८ "भविष्यति पुरी लङ्का···· ····।"

पुण्योत्सवसमृद्धा च नष्टभर्त्री सराक्षसा।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना॥

( वा० रा०, सु० का० २६।२६ )

सा० मी० पृ० १५८ " " तायाः प्रचकारासौ ···।"

प्रजागराञ्चकारारेरीहास्वनिशमादरात् ।
प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः॥

( भट्टि० ६।१२ )

सा० मी०, पृ० १६२ "लाटीनाभिनिभं···· ··"

साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
कान्ति वर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात् पटात्।
हूणीनां कुरुते मधूककुसुमं लावण्यलुण्ठाकतां
लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरम्॥

( का० मी० १८ दशोऽध्यायः )

सा० मी०, पृ० १६२ "सद्योमार्जितदाक्षिणात्यतरुणी "

गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः
सद्यो मार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः।
चन्द्रः सुन्दरि दृश्यतामयमसौ चण्डीशचूडामणिः
सम्बन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरुः॥

( बालरामायणम् १०।४१ )

सा० मी०, पृ० १६२ 'इह हि कोदण्डयष्टिद्रमिड··· "

इह हि वहति कामं कामकोदण्डयष्टिं
द्रविडयुवतिगण्डश्यामिकां कोशकारः।
चिरविरहितहंसीकण्ठकाण्डावपाण्डुः
स्फुरति च रुचिमत्ता पर्वणां पुण्ड्रकस्य॥

( बालरामायणम् ५।३४ )

सा० मी०, पृ० १६२ "अथैष प्राचीनः ...."

इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।
अथैष प्राचीनः सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥

( का० मी० १७ दशोऽध्यायः )

सा० मी०, पृ० १६३ "उद्गर्भहूणरमणी......"

उद्गर्भहूणरमणीरमणोपमर्द-
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥

( सु० क० ११९३ )

सा० मी०, पृ० १६३ "गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै स्ताम्बूलीपटलैः"

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै-
स्ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः ।
तक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥

( मा० मा० ६।१९ )

सा० मी०, पृ० १६३ "वाह्लीकीरदनच्छदारुणदलैः फुल्लैरशोकोऽञ्चितः ।"

सूते सम्प्रति दुग्धमुग्धसुभगं पुष्पोद्गमं मल्लिका
वाह्लीकीदशनव्रणारुणदलैः पत्रैरशोकोऽञ्चितः ।
भृङ्गीलङ्घितकोटि किंशुकमिदं किञ्चिद् विवृन्तायते
माञ्जिष्ठैर्मुकुलैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥

( बालरामायणम् ५।४० )

पुष्पैः सम्प्रति काञ्चनारतरवः प्रत्यङ्गमालिङ्गिता
वाह्लीकीदशनव्रणारुणतरैः पत्रैरशोकोऽञ्चितः ।
जातं चम्पकमप्युदीच्यललनालावण्यचौर्यक्षमं
माञ्जिष्ठै० .... .... .... .... .... .... .... " ॥

( का० मी० १७ दशोऽध्यायः )

सा० मी०, पृ० १६३ "माञ्जिष्ठै ............"

साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै-
र्बाह्लिकीवशनव्रणारुणतरैः पत्रैरशोकश्रितः ।
भृङ्गालम्बितकोटिकिंशुकमिदं किञ्चिद् विवृन्तायते
माञ्जिष्ठैः स्तवकैश्च पाटलतरोरन्यैव काचिल्लिपिः ॥

( बा० रा० ५।४०; विद्ध० भ० १।२५ )

सा० मी०, पृ० १६६ "कश्चित् कराभ्याम्"

कश्चित् कराभ्यामुपगूढनाल-
मालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि
लीलारविन्दं भ्रमयाञ्चकार ॥

( र० वं० ६।१३ )

सा० मी०, पृ० १६७ "विलासिनीविभ्रमदन्तपत्रम्"

विलासिनीविभ्रमदन्तपत्र-
मापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसन्निवेशै-
र्विपाटयामास युवा नखाग्रैः ॥

( र० वं० ६।१७ )

सा० मी०, पृ० १६९ "प्रत्यग्रमञ्जनविशेषविमुक्तमूर्तिः"

प्रत्यग्रमञ्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव ॥

( रत्नावली० १।२१ )

सा० मी०, पृ० १७२ "अनाकूतैरेव "

अनाकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम् ।
उपादत्ते नो वा विरमति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैरङ्कुरयति ॥

( अनर्घराघवम् ३।५ )

सा० मी०, पृ० १७८ "सग्गं अपारिजाअं"

सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं मुहुमहस्स उरं।
सुमरामिमहणपुरओ अमुद्धअन्दं च हरजडापब्भारं ॥

( रावणवहो ४।२० )

सा० मी०, पृ० १७९ "मैथिलीमुदवहद् रघूत्तमः"

पार्थिवीमुदवहद् रघूद्वहो
लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ
तौ कुशध्वजसुते सुमध्यमे ॥

( र० व० ११।५४ )

सा० मी०, पृ० १७९ "द्वयं गतं सम्प्रति शोचनीयताम्"

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

( कु० स० ५।७१ )

सा० मी०, पृ० १७९ "पाण्ड्योऽयमंसार्पितलम्बहारः"

पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥

( र० व० ६।६० )

सा० मी०, पृ० २७९ "शशिनमुपगतेयं कौमुदी"

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

( र० व० ६।८५ )

सा० मी०, पृ० १७९ "अने यूना सह पार्थिवेन"

अनेन यूना सह पार्थिवेन
रम्भोरु काच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु
विहर्तुमुद्यान-परम्परासु ॥

( र० व० ६।३५ )

सा० मी०, पृ० १८० "कुलेन कान्त्या वयसा नवेन"

कुलेन कान्त्या वयसा नवेन
गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व
रत्नं समागच्छतु काञ्चनेन ॥

( र० व० ६।७९ )

सा० मी०, पृ० १८० "अध्यास्य चाम्भःपृषतोक्षितानि"

अध्यास्य चाम्भःपृषतोक्षितानि
शैलेयगन्धीनि शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं
कान्तासु गोवर्धनकन्दरासु ॥

( र० व० ६।५१ )

सा० मी०, पृ० १८० "सम्भाव्य भर्तारममुं युवानम्"

सम्भाव्य भर्तारममुं युवानं
मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने
निर्विश्यतां सुन्दरि यौवनश्रीः ॥

( र० व० ६।५० )

सा० मी०, पृ० १८० "असौ कुमारस्तमजोऽनुजातः"

असौ कुमारस्तमजोऽनुजात-
स्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्येण दम्यः सदृशीं बिभर्ति ॥

( र० व० ६।७८ )

सा० मी०, पृ० १८१ ''अनेन कल्याणि करे गृहीते''

अनेन कल्याणि करे गृहीते
महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया
दिशः सपत्नी भव दक्षिणस्याः ॥

( शृ० प्र०, ६मः प्र०, पृ० ३२१ )

सा० मी०, पृ० १८२ 'सा चूर्णगौरं रघुनन्दनस्य'

सा चूर्णगौरं रघुनन्दनस्य
धात्रीकराभ्यां करभोपमोरुः ।
आसञ्जयामास यथाप्रदेशं
कण्ठे गुणं मूर्तमिवानुरागम् ॥

( र० वं० ६।८३ )



## परिशिष्टम्—५

# गद्योदाहरणानुक्रमणी

| | | |
|---|---|---|
| ( न ) | | |
| नद्यास्तीरे फलानि सन्ति, विषं भुङ्क्ष्व, निमिषति | ५ | .... |
| न निर्गुणमपि चाकाङ्क्षेत् | १५८ | कामशास्त्रम् |
| नाथ ! जीवितनिबन्धन.... ....विमुच्य गच्छसि.... | ७८ | कादम्बरी, महाश्वेता-विलापवर्णना, पृ० ४९०, चौखम्बाप्रकाशनम्, १९७९ |
| नीलादोषधौ | १५४ | .... |
| नीलोत्पलम् | ११ | .... |
| ( प ) | | |
| पितृणां तृप्यते गणः | १५७ | उपस्मृतिः |
| पुष्पावचयसमयः | १५३ | .... |
| प्राणिनि च | १५८ | .... |
| प्रामाण्यानुग्राहकस्तर्कः .... | १५७ | न्यायशास्त्रम् |
| ( ब ) | | |
| बहुलपक्ष इव राजशून्यः | १४२ | कादम्बरी |
| ब्राह्मणवद् ब्राह्मणात् .... | १५७ | निरुक्तम् |
| ( म ) | | |
| मकरे दशभागाया: सङ्ग्रहं त्यजेत् | १५७ | ज्योतिषम् |
| मम हि सम्प्रति.... ....वृत्ति-सारूप्यतश्चैतन्यम् | ६६ | .... |
| मलयमारुतावतारतरङ्गध्वजांशुकेषु | १५२ | कादम्बरी |
| माघः ( अस्पृहम् ).... ...."जितमिह.... .... ...."वैजयन्ती" इत्यत्र .... .... | | |
| दुट्ठसद्दूलो क अन्त लीला इदं करोदि | ८६ | मा०मा०, अ० २, श्लो० १५ |
| यजमानः प्रस्तरः, अग्निर्वै ब्राह्मणः | ४ | जैमिनिः |
| यष्टिकां भोजय, मञ्चाः क्रोशन्ति,........ ........... .. नृपोऽयं पुरुषः | ५ | अक्षपादः |
| यस्य च मदकलकरिकुम्भ०........ ..............आजगाम राजलक्ष्मीः | १०७ | कादम्बरी, कथामुखे शूद्रकवर्णनम्, पृ० १४-१५, चौखम्बाप्रकाशनम्, १९७९ |
| युगपदुभाभ्यां........पुत्रादिभिः प्रयुक्तम् | १५८ | अर्थशास्त्रम् |

## परिशिष्टम्—६

# ग्रन्थान्तरेषूपलभ्यमानाः कारिकाः

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| अभिधेयाविनाभूतं स्पृशन्ती लक्षणोच्यते । <br> पृ० ३ | अभिधेयाविनाभूतप्रतीतिर्लक्षणेति या । <br> सैषा विदग्धवक्रोक्तिर्जीवितं वृत्तिरिष्यते ॥ <br> (श्रृ०प्र०, ७मः प्र०, पृ० २२३) |
| परस्परस्य ग्रथनं पदा(र्था)नामिहान्वयः । <br> .... ... .... ... .... .... .... ....॥ २७ ॥ <br> पृ० ११ | परस्परस्य ग्रथनं पदानामन्वयः स्मृतः । <br> (भरतकोषे विशपृष्ठे कारिकेयं <br> मल्लकनाम्ना खल्वेवमुद्धृता ) |
| वाच्योऽर्थः ... ........ । <br> .. ... ... अयमेतयोः ॥ <br> पृ० १८ | वाच्योऽर्थः ... .... ...... ....। <br> .... .... अयमेतयोः ॥ <br> ( व० जी० १।८ ) |
| शब्दो .................... । <br> .... ०कारी सुस्पन्दसुन्दरः ॥ <br> पृ० १८ | शब्दो .. .. .. ... ..... । <br> .... ०कारिस्वस्पन्दसुन्दरः ॥ <br> ( व० जी० १।९ ) |
| एवं पदानां ... ......। <br> .... .... .... कर्तुमर्हति ॥ <br> पृ० २५ | एवं पदानां ... ......। <br> .......... कर्तुमर्हति ॥ <br> ( स० क० १।५८ ) |
| अनेकगुणमप्येतद् दोषेणैकेन निन्द्यते । <br> अनेकलक्षणोपेतं वपुः श्वित्रेण दुर्भगम् ॥ <br> पृ० २५ | तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन । <br> स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ <br> ( काव्याद० १।७ ) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| श्लेषः प्रसादः ··· ··· ।<br>··· ··· ··· समाधयः ॥<br>इति काव्यशरीरस्य श्लाघ्याः ।<br>पृ० २८ | श्लेषः प्रसादः··· ··· ।<br>··· ··· ··· ···समाधयः ॥<br>इति वैदर्भमार्गस्य प्राणा ।<br>( काव्याद० १।४१–४२ ) |
| सुश्लिष्टत्वं विभिन्नानां श्लेष इत्यभिशब्द्यते ।<br>पृ० २८ | गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते ।<br>( स० क० १।६६ ) |
| श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।<br>पृ० ३२ | श्लाघ्यैः ··· ··· ।<br>काव्यद० १।७९ )<br>श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता ।<br>( स० क० १।७० )<br>काव्यादर्शकारो दण्डी अग्निपुराणीयं मतमेवमुद्धरति—<br>"उत्तानपदतौदार्यं युतं श्लाघ्यैर्विशेषणैः ।"<br>( अग्निपु० ) |
| नैष्ठुर्यरहितं यत् स्यात् ।<br>पृ० ३१ | अनिष्ठुराक्षरप्रायं··· ··· ।<br>( स० क० १।६८ ) |
| ओजस्तद्भूयसां यस्मिन्नेकार्थीभवनं विदुः ।<br>पृ० ३२ | ओजः समासभूयस्त्वमौजित्यं गाढबन्धता ।<br>( स० क० १।७१ ) |
| यदुज्ज्वलत्वमुचितं सा काव्ये कान्तिरुच्यते ।<br>पृ० ३४ | यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते ।<br>( स० क० १।६९ ) |
| अन्यावलम्बनं यत् स्यात्<br>स समाधिरिति स्मृतः ।<br>पृ० ३४ | समाधिः सोऽन्यधर्माणां<br>यदन्यत्राधिरोपणम् ।<br>( स० क० १।७२ ) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| दोषश्च सकलोऽप्येष ...... ...।<br>.... ... ... ... ... ॥<br>पृ० ४० | विरोधः सकलोऽप्येष .. ।<br>.... .... .. ॥<br>( काव्यद० ३।१७९ )<br>विरोधः सकलेष्वेव ...।<br>.... ... .... .. ... ...॥<br>( स० क० ३।१२६ ) |
| काव्ये शोभाकरान् ।<br>पृ० ४१ | काव्यशोभाकरान् ।<br>( काव्याद० २।१ ) |
| समा श्रुतिरनुप्रासः पदेषु ........ ।<br>.... .... ... बोधिनीयद्यदूरता ॥<br>पृ० ४२ | वर्णावृत्तिरनुप्रासः पादेषु .. .. ।<br>... ......... बोधिनी यद्यदूरता ॥<br>( काव्याद० १।५५ )<br>......... .. पादेषु ... .. ।<br>.... .. बोधिनी यद्यदूरता ॥<br>( स०क० २।९७ ) |
| शषाभ्यां रेफसंयोगे टवर्गेण च ... ।<br>... ... ... .. स्याद्वयस्वन्यैश्च ...॥<br>पृ० ४१ | शषाभ्यां रेफसंयोगैष्टवर्गेण च ...।<br>........स्याद् ह्लह्लाद्यैश्च...॥<br>( बह्वन्याद्यैश्च )<br>( उ० का० सा० स०, १।४ ) |
| स्वरूपार्था० ... ... ... ...फलाकरा ।<br>शब्दानां स्वपदानां वा......... ॥<br>पृ० ४३ | स्वरूपार्था० .... .. फलान्तरात् ।<br>शब्दानां वा पदानां वा.........॥<br>( उ० का० सा० स० १।८ ) |
| सरूपसंयोगयुतां .... .. ... ।<br>.... ....उपनागरिकां बुधाः ॥<br>पृ० ४२ | सरूपसंयोगयुतां...... .. ।<br>.... .. उपनागरिकां बुधाः ॥<br>( उ० का० सा०स० १।५) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| शेषैर्वर्णै ··· कोमलां विदुः । | शेषैर्वर्णै · ···· ··· कोमलाख्यया । |
| | ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥ |
| पृ० ४२ | ( उ० का० सा०सं० १।६ ) |
| सरूपव्यञ्जनन्यासं ··· । | सरूपव्यञ्जनन्यास । |
| ······ ··· ··· कवयः सदा ॥ | ···· कवयः सदा ॥ |
| पृ० ४२ | ( उ० का० सा० सं० १।७ ) |
| एकरूपेण ·· द्वयोर्वर्णन · । | एकरूपेण ··· द्वयोर्भणन । |
| ······ यः स ··· इत्यभिधीयते ॥ | यत्स इत्यभिशब्दितः ॥ |
| पृ० ४३ | ( स० क० २।६८ ) |
| साभिप्रायस्य वाक्यस्य वचसो.पि निवेशनम् । | साभिप्रायस्य वाक्ये यद्वचसो विनिवेशनम् । |
| ··· ··· ···· ···· ···· ···· ··· · ॥ | ···· ··· ·· ··· ··· ··· ··· ·· ···· ·· ॥ |
| पृ० ४४ | ( स० क० २।४० ) |
| शब्दस्य युज्यमानस्य येन संदंशधार्मिणा । | अयुज्यमानस्य मिथःशब्दस्यार्थस्य वा पुनः । |
| योजना क्रियते युक्तिरिति युक्तिविदो विदुः ॥ | यासौ युक्तिरित्युच्यते बुधैः ॥ |
| पृ० ४४ | ( स० क० २।४८ ) |
| पदपादादि · ··· ······ । | पदपादार्ध० ··· ···· ···· ·· । |
| ··· ··· ·· ··· प्रचक्षते ॥ | ···· ···· ···· ···· प्रचक्षते ॥ |
| पृ० ४५ | ( स० क० २।५७ ) |
| वाक्ये ·· गुम्फना स्मृता । | वाक्ये···· ··· गुम्फना स्मृता । |
| पृ० ४५ | ( स० क० २।५३ ) |
| वर्णस्थान० ··· ··· ··· । | वर्णस्थान०···· ··· ···। |
| · ·· ····०भिधीयते ॥ | ···· ···· ····०भिधीयते ॥ |
| पृ० ४६ | ( स० क० २।१०९ ) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| विभिन्नार्थैक० ···· ··· ।<br>अव्यपेतं व्यपेतं च·· ··· ॥<br>पृ० ४६ | विभिन्नार्थैक० ·· ।<br>अव्यपेतव्यपेतात्मा ··· ॥<br>( स० क० २।५८ ) |
| सर्वात्मनैव सादृश्यं ··· ।<br>···· ·· रूपमानं ···· ॥<br>पृ० ५० | सर्वं सर्वेण सारूप्यं ।<br>···· ···· रूपमासु ॥<br>( भा० काव्या० २।४३ ) |
| अखण्डमण्डलः ·· कान्तानां मुखद्युतिः ।<br>··· ··· ···· सामात्त् शशि ··· ···॥<br>पृ० ५१ | अखण्डमण्डलः कान्ताननद्युति ।<br>सामान्याच्छशि ·· ॥<br>( उदाहरणम्, भा० काव्या० २।४४ ) |
| भूयोऽवयवसामान्यादुपमा कैश्चिदिष्यते ।<br>पृ० ५१ | प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ।<br>भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥<br>( स० क० ४।५ ) |
| उपमैव तिरोभूतभेदा रूपकमिष्यते ।<br>पृ० ५३ | उपमैव तिरोभूतभेदा रूपकमुच्यते ।<br>( काव्याद० २।६६ ) |
| श्रुत्या सम्बन्ध० ··· ·· ।<br>···· रूपकं तु तत् ॥<br>पृ० ५३ | श्रुत्या सम्बन्ध ···· ··· ।<br>···· ···· ··· रूपकं तु तत् ॥<br>( उ० का० सा० स० १।११ ) |
| अन्यथावस्थितं······ऽन्यथा ।<br>पृ० ५४ | अन्यथावस्थितं ·· ····ऽन्यथा ।<br>( स० क० ४।५० ) |
| मन्ये शङ्के ··· ···· ···एवमादयः ।<br>पृ० ५४ | मन्ये शङ्के··· ···· एवमादयः ।<br>( काव्याद० २।२३४ ) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| शब्दोपात्ते प्रतीते वा० ····· ।<br>मुख्यस्याधिक्यकथनं व्यतिरेकः स उच्यते ॥<br>पृ० ५६ | शब्दोपात्ते प्रतीते वा ··· ···· ··· ····।<br>तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥<br>( काव्याद० २।१८० )<br>··· ··· ··· ।<br>भेदाभिधानं भेदश्च व्यतिरेकश्च कथ्यते ॥<br>( स० क० २।३२ ) |
| "प्रसिद्धहेतुव्यावृत्त्या"<br>पृ० ५६ | प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम्।<br>यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना॥<br>(काव्याद० २।१९९; स० क० ३।९ ) |
| अपह्नुतिरपह्नुत्य किञ्चिदाख्यातम् ।<br>पृ० ५६ | ···· किञ्चिदन्यार्थदर्शनम् ।<br>( काव्याद० २।३०४; स०क० ४।४१ ) |
| विरुद्धैरविरुद्धैर्वा ··· ।<br>···· ··· स स्थायी लवणाकरः ॥<br>पृ० ६५ | विरुद्धैरविरुद्धैर्वा ··· ···· ····।<br>···· ··· स स्थायी लवणाकरः ॥<br>( दशरू० ४।३४ ) |
| स्तम्भस्तनुरुहोद्भेदा ··· ।<br>वैवर्ण्यमश्रु प्रलय ··· गुणाः ॥<br>पृ० ६७ | ··· ··· ··· ··· ।<br>वैवर्ण्यमश्रुप्रलय ···· ··· स्मृताः ॥<br>( स० क० ५।१५ ) |
| यथा नराणां ··· ···· ··· ।<br>···· ···· ··· स्थायी महानिह ॥<br>पृ० ६६ | यथा नराणां ···· ···· ··· ।<br>··· ···· ··· स्थायी महानिह ॥<br>( भ० ना० शा० ७।८ ) |
| रजस्तमोभ्यामस्पृष्टं ···· ··· ··· ।<br>तस्माद् भवन्ति ये भावाः<br>सात्त्विका अष्ट कीर्तिताः ।<br>पृ० ६७ | ···· ··· ··· ··· ··· ।<br>निर्वृत्तयेऽस्य तद्योगात्<br>प्रभवन्तीति सात्त्विकाः ॥<br>( स० क० ५।२० ) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| स्मृतिवितर्क .... .... .. ।<br>.. .. ...मूढता मदः ॥ | स्मृतिवितर्क .... .. ।<br>.... .... ... मूढता मदः ॥ |
| हर्षामर्षावसूयेर्ष्या ... .. ।<br>... ... ....सम्भ्रमः श्रमः ॥ | हर्षामर्षावसूयेर्ष्या .... ... ।<br>.... ... .. .... सम्भ्रमः श्रमः ॥ |
| निर्वेदो .... .... .... ।<br>.... .... .... ... ॥ | निर्वेदो ... ... ... .... ... ।<br>.. .... ... व्यभिचारिणः ।<br>( स०क० ५।१६-१८ ) |
| पृ० ६७-६८ | |
| मनःशरीरयोः .. .. श्रमः ।<br>पृ० ६८ | मनःशरीरयोः .. .... श्रमः ।<br>(स० क० ५।१६०) |
| क्रियाविद्वेष .. .... मदादिभिः ।<br>पृ० ६९ | क्रियाविद्वेष ... ... .... मदादिभिः ।<br>(स० क० ५।१६१) |
| विभावैरनुभावैश्च ।<br>... ... स्वादुत्वं ... .. ॥<br>पृ० ७१ | विभावैरनुभावैश्च .... .... ... ।<br>... .... स्वाद्यत्वं ... ... ॥<br>(दशरू० ४।१) |
| भावो यदा ... ... .... ... ।<br>... ... .... विप्रलम्भः स उच्यते ॥<br>पृ० ७२ | भावो यदा ... ... ... .. ।<br>.. .. .. .... विप्रलम्भस्तदोच्यते ॥<br>(स० क० ४।४५) |
| रतिवेष्ट० .... .... .... ।<br>पृ० ७२ | रतिवेष्ट० .... .... ।<br>(स० क० ५।५१) |
| पूर्वानुरागो ... .... .... करुणः स्मृतः ।<br>.... .... .... .... विप्रलम्भश्चतुर्विधः ॥ | पूर्वानुरागो .... ...करुणश्च सः ।<br>.... .... .... चतुःकाण्डः प्रकाशते ॥ |
| प्रागसङ्गतयो० .... .... प्रगल्भते ।<br>.... .... .... उच्यते ॥<br>पृ० ७४ | प्रागसङ्गतयो० .... .... प्रवर्तते ।<br>.... ... .... .... ... उच्यते ॥<br>(स० क० ५।४६, ४७) |
| अहेरिव .... .. .... यत् ।<br>. नेत्युक्त्या .... ... ॥<br>पृ० ७८ | अहेरिव .... .... ... .... सः ।<br>.... .... नेत्युक्तेः ... .... .... ॥<br>(स० क० ५।४८) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| भ्रान्तिर्विपर्ययज्ञानं सादृश्योदयहेतुकम् ।<br>पृ० ७५ | ... ... द्विधा सापि प्रयुज्यते ।<br>(स० क० ३।३५) |
| द्वयोर्यत्रोक्ति० ... .... ।<br>साम्यमित्यामनन्त्येतं साहित्यरसवेदिनः ॥<br>पृ० ७६ | .... .... ... .... ।<br>उपमारूपकान्यत्वे साम्यमित्यामनन्ति तत् ॥<br>(स० क० ४।३४) |
| अर्थयोरति .... .... डोलाते .. ।<br>.... .... .... संशयं विदुः ॥<br>पृ० ७६ | अर्थयोरति ... दोलायते ... ।<br>... .... .. संशयं विदुः ॥<br>(स० क० ४।४१) |
| देशान्तराभि० .. .... .... ।<br>.... .... .... .... सोऽभिधीयते ॥<br>पृ० ७७ | देशान्तरादिभि० .... ।<br>... ... सोऽभिधीयते ॥<br>(स० क० ५।४९) |
| लोकान्तरगते वल्लभो यदा ।<br>.... .... ... दीन ... ॥<br>पृ० ७७ | लोकान्तरगते .... .... वल्लभा ।<br>... .... .... दीना .... ॥<br>(स० क० ५।५०) |
| | भूतप्रेतपिशाचाद्याः घोऽशात्यन्तमुद्धताः । |
| रसैरहास्य० ... .... ।<br>मायेन्द्र० ... .... .... चेष्टितैः ॥<br>चन्द्रसूर्योपरागैश्च ... रौद्रे रसेऽङ्गिनि ।<br>चतुरङ्कः ... ... ... ॥<br>पृ० ८८ | रसैरहास्य० .... .... ... ॥<br>मायेन्द्र० .... .... ... .... .... ।<br>चन्द्र० ... .... ... रौद्ररसेऽङ्गिनि ॥<br>चतुरङ्कः .... .... ... .... ... ॥<br>(दशरू० ३।५८-६०) |
| न सोऽस्ति प्रत्ययो .... ... ।<br>.... ... .... भासते ॥ | न सोऽस्ति .... .. .... ।<br>... ... ... भासते ॥ |
| वाग्रूपता ... ... . .... ... ।<br>.... ... ... .. .. प्रत्यवमर्शिनी ॥<br>पृ० ८९ | वाग्रूपता .... ... .. ।<br>.. .... .... प्रत्यवमर्शिनी ॥<br>(वा० प०) |
| पश्यति स्त्रीति .... ... .... ... ।<br>... ... ... .... . प्रतीयते ॥<br>पृ० ९१ | पश्यति ... .... .... .... ।<br>.... .... .... .... प्रतीयते ॥<br>(स० क० ५।४) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| जायेत हास्यः शृङ्गाराद् वीराज्जायेत चाद्भुतः ।<br>रौद्राज्जायेत करुणो बीभत्साच्च भयानकः ॥<br>पृ० ९२ | शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः ।<br>वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥<br>(भ० ना० शा० ६।३९) |
| विशिष्टादृष्टजन्म यमजमीनामन्तरात्मा ।<br>स्वात्मगामि० .... .... .... ॥<br>पृ० ९४ | विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु ।<br>आत्मसम्यग् .... .... .... .... ॥<br>(स० क० ५।२) |
| तथाभिमानोऽहङ्कारः शृङ्गार इति चोच्यते ।<br>पृ० ९४ | रसाभिमानोऽहङ्कारः शृङ्गार इति गीयते ।<br>(स० क० ५।१) |
| सामाजिकानां च .... .... ।<br>.... .... .... संविदेव नः ॥<br>पृ० ९७ | द्र०--भट्टतोत-काव्यकौतुकम् |
| सामाजिकानां .... .... ।<br>.... तत्परमामसः ॥<br>विशिष्टैः .... .... ।<br>.... .... उत्पद्यते रसः ॥<br>पृ० १०१ | द्र०—भट्टतोत -काव्यकौतुकम् |
| वैदर्भ्यादिकृतः .... .... .... ।<br>.... .... व्युत्पत्तौ .... .... ॥<br>पृ० १०२ | वैदर्भ्यादिकृतः .... .... ।<br>.... व्युत्पत्त्या .... ॥<br>(स० क० २।२७) |
| या विकासेऽथ विस्तारे क्षोभविक्षेपयोरपि ।<br>चेतसो वर्तयित्री स्याद् वृत्तिः सापि चतुर्विधा ॥<br>कैशिकी भारती च स्यात् सात्वत्यारभटीति च ।<br>सुकुमारार्थसन्दर्भा .... .... कथ्यते ॥<br>पृ० १०५ | या विकासेऽथ विक्षेपे सङ्कोचे विस्तरे तथा ।<br>.... .... वृत्तिः सापि षड्विधा ॥<br>कैशिक्यारभटी चैव भारती सात्वती परा ।<br>सुकुमारार्थ .... कथ्यते ।<br>(स० क० २।२४,२५,२६) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| कैशिकी भारतीति द्वे ···· ।<br>···· ···· ···· सात्वत्यारभटी पुनः ॥<br>वृत्तिः सर्वत्र भारती ॥<br>पृ० १०६ | शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।<br>रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥<br>(दशरू० २।६२) |
| शुद्धा सङ्कीर्णानन्यगामिनी ।<br>अपभ्रष्टेति सा चेयं जातिः षोढा निगद्यते ॥<br>पृ० १०८ | ···· ···· सङ्कीर्णा नान्यगामिनी ।<br>अप ···· साधार्यैः ···· ···· ···· ॥<br>(स० क० २।१७) |
| अर्थव्यक्ते रयं भेदमियतैव प्रपद्यते ।<br>जायमानमियं वक्तिरूपं सा सार्वकालिकम् ॥<br>पृ० ११५ | ···· भेदमियता प्रतिपद्यते ।<br>जायमानप्रियं ···· ···· ॥<br>(स० क० २।४) |
| अलङ्कार्यतया ···· ···· ।<br>···· ···· ···· अवशिष्यते ॥<br>कुतस्तद्रहितं स्याच्चेन्निरूपाख्यं ।<br>शरीरं चेद० ···· किमलङ्कुरुते परम् ।<br>नात्मनैवात्मनः ···· ···· ···· ॥<br>भूषणत्वे ···· ···· ···· ।<br>···· ···· ···· ···· ऽथवा ॥<br>स्पष्टे सर्वत्र ···· ···· ।<br>···· ···· ···· नावशिष्यते ॥<br>पृ० ११६ | अलङ्कारकृतां ···· ।<br>···· अवतिष्ठते ॥<br>स्वभावव्यतिरेकेण वक्तुमेव न युज्यते ।<br>वस्तु तद्रहितं यस्मान्निरूपाख्यं ॥<br>···· ···· किमलङ्कुरुतेऽपरम् ।<br>आत्मैव नात्मनः ···· ॥<br>भूषणत्वे ···· ···· ···· ।<br>···· ···· ···· ऽथवा ॥<br>स्पष्टे सर्वत्र ···· ।<br>···· ···· ···· नावशिष्यते ॥<br>(व० जी० १।११-१५) |
| विवक्षया विशेषस्य ···· ···· ···· ।<br>···· ···· स्यादेषा वक्रोक्तिजीवितम् ॥<br>सा च ···· स्वा चोप ।<br>···· ···· ···· ···· ···· क्वचित् ॥<br>पृ० ११६, ११७ | ···· ···· ···· ।<br>स्यादलङ्कारोत्तमा च सा ॥<br>सा च च ···· चोप ···· ।<br>···· ···· ···· क्वचित् ॥<br>(स० क० ४।८१-८२) |
| अभिप्रायानुकूल्यात्तु प्रवृत्तिगणनं हि यत् ।<br>साङ्गावगर्भिताभेदो नायिकोक्तेः प्रवृत्तिः ॥<br>पृ० ११७ | अभिप्रायानुकूल्येन प्रवृत्तिभाव उच्यते ।<br>सोद्भेदोऽथ निरुद्भेदश्चैकतश्चाभितश्च सः ॥<br>(स० क० २।८२) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
|---|---|
| सेत्रपाया निरुद्भेदासोऽत्रसूक्ष्मेति कथ्यते ।<br>इङ्गिताकारलक्ष्या स्यात् सा भूमिकान्तरम् ॥<br>पृ० ११८ | निरुद्भेदस्तु यो भावः स सूक्ष्मस्तैर्निगद्यते ।<br>इङ्गिताकारलक्ष्यात् स सूक्ष्मात् स्याद् भूमिकान्तरम् ॥<br>(स० क० ३।४५) |
| साभिप्रायोक्तिविन्यासः प्राशैर्ज्ञेया सभाविका ।<br>पृ० ११८ | साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते ।<br>(स० क० ३।८३) |
| यत्रोपमानादेवैतदुपमेयं ··· ।<br>··· ··· मनीषिणः ॥<br>पृ० ११८ | यत्रोपमानादेवैत ··· ।<br>··· ··· ··· मनीषिणः ॥<br>(स० क० ४।४५) |
| कर्त्रादीनां क्रियावेशः सहान्यैः सदृशेतरैः ।<br>सदृशैर्वा क्वचिद् यत्र सहोक्तिं तां प्रचक्षते ॥<br>पृ० ११६ | समावेशः सहान्यैर्यः क्रियादिषु ।<br>विविक्तश्चाविविक्तश्च सहोक्तिः सा निगद्यते ॥<br>वैसादृश्यवती चेयमुच्यमाना मनीषिभिः ।<br>सहेत्यादिप्रयोगेषु ससादृश्या च दृश्यते ॥<br>(स० क० ४।५७,५८) |
| दोषस्य यो ··· ··· ··· ।<br>सा लेशोक्तिस्तथा········ ॥<br>पृ० १२० | दोषस्य यो ।<br>स लेशः स्यात् ततो ··· ··· ॥<br>(स० क० ४।५६) |
| जायेतार्थान्तरोक्तिः सा ··· ··· ··· ।<br>···· ··· ···· योग्यस्य ··· ॥<br>पृ० १२० | ज्ञेयः सोऽर्थान्तरन्यासो ··· ···· ।<br>··· योऽन्यस्य ··· ॥<br>(काव्याद० २।१६९, स०क० ४।६७) |
| काकुस्वरपदच्छेदभेदाभिनयकान्तिभिः ।<br>सूच्यते यत्र चान्यार्थः सूच्योक्तिरिति सा स्मृता ॥<br>पृ० १२२ | ··· ··· ··· ···· ।<br>पाठो योऽर्थविशेषाय पठितः सेह षड्विधा ॥<br>(स० क० २।५६) |
| अन्योक्तीनामनुकृतिश्छायोक्तिरिति कथ्यते ।<br>लोकच्छेकोन्मकोन्मत्तपोटामत्तोक्तिभेदिनी ॥<br>पृ० १२२ | अन्योक्तीनामनुकृतिश्छाया सापीह षड्विधा ।<br>लोकच्छेकार्भकोन्मत्तपोटामत्तोक्तिभेदतः ॥<br>(स० क० २।३९) |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| सविरोधा सोत्तरेति द्वयमन्यं प्रचक्षते । | ···· ···· ···· ; |
| विरोधस्तु पदार्थानां परस्परमसङ्गतिः ॥ | असङ्गतिः प्रत्यनीकमधिकं विषमश्च सः ॥ |
| पृ० १२४ | (स० क० ३।२४) |
| पदर्थानां तु यः ··· तदुत्तरमिहोच्यते । | पदार्थानां तु य तदुत्तरमिहोच्यते । |
| पृ० १२४ | (स० क० ३।१३) |
| विभूषणं चाक्षरसङ्गतिश्च | विभूषणं चाक्षरसंहितं च |
| शोभाभिमानो गुणकीर्तनं च । | ···· ···· ··· ··· । |
| प्रोत्साहनोदाहरणे निरुक्तं | ···· ···· |
| गुणानुवादोऽतिशयश्च हेतुः ॥ | ··· ···· ··· ···· ॥ |
| सारूप्यमिथ्याध्यवसायसिद्धि- | ··· ··· ···· |
| पदोच्चयाक्रन्दमनोरथाश्च । | ··· ··· ··· ··· । |
| आख्यानयाच्ञा प्रतिषेधपृच्छा | ··· ···· ···· |
| दृष्टान्तनिर्भासनसंशयाश्च ॥ | ··· ···· ····॥ |
| आशीः प्रियोक्तिः कपटं क्षमा वा | आशीः प्रियोक्तिः ··· ··· च |
| ··· ··· ··· । | ··· ···· ··· । |
| ···· ··· ···· | ··· ··· ··· |
| ··· परिदेवनं च ॥ | ···· ····परिदेवनं च ॥ |
| षट्त्रिंशदेतानि ···· | षट्त्रिंशदेतानि ···· |
| ···· ···· ··· । | ··· ··· । |
| ··· ···· ··· | ··· ··· ···· |
| ··· ··· यथारसं तु ॥ | ·· यथारसं तु ॥ |
| अलङ्कारै० ···· ··· ··· । | अलङ्कारै० ···· ···· ···· । |
| ··· ··· चित्रार्थैस्तद् ··· ··· ॥ | ··· विन्यस्तैस्तद् ··· ··· ॥ |

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| तत्राल्पैरक्षरैः ···· ···· ··· ।<br>··· ···· ···· संज्ञितम् ॥<br>सिद्धैरर्थैः ··· ··· ···, ···· ··· ।<br>यत्र श्लिष्टविचित्रार्था ··· ···· ॥<br>पृ० ३८–१३६ | यत्राल्पैरक्षरैः ··· ········ ।<br>··· ··· ···· ··· ·· संज्ञितम् ॥<br>सिद्धैरर्थैः ···· ···· ··· ···· ···· ।<br>यत्र श्लक्षण ···· ·· ··· ·· ·· ॥<br>(भ० ना० शा० १७।१-७)[1] |
| प्रज्ञा नवनवोन्मेष ···· ।<br>पृ० १३७ | द्र०—भट्टतोत-काव्यकौतुकम् |
| नवोऽर्थः सूक्तिरग्राम्या श्लाघ्यो<br>बन्धः स्फुटा श्रुतिः।<br>अलौकिकार्थयुक्तिश्च रसमाहर्तुमीशते ॥<br>पृ० १३७ | नवोऽर्थः ···· ··· श्लाघ्यो ···· ····।<br>अलौकिकार्था युक्तिश्च ···· ···· ··· ॥<br>(स० क० ५।७) |
| अनुकम्पाद्यतिशयो ··· · ।<br>···· ···· ···· प्रत्युतेत्थमलङ्क्रिया ॥<br>पृ० १४२ | अनुकम्पाद्यतिशयो ··· · ।<br>··· ···· ·· प्रत्युतेयमलङ्क्रिया ॥<br>(काव्याद० ३।१३७; स० क० १।११५) |
| क्रीडामहिम्न्योर्देश्याश्च ··· ···· ··· । | क्रीडामहिमान्यो···कामसू० १।४।७, जय-<br>मङ्गला टीका । |
| द्रष्टव्यानि प्रकीर्णानि ·· ··· ।<br>··· ·· ·· ···· ···· · ···· ····॥<br>··· ··· ··· ·· ···· ··· ···· · ।<br>··· ··· ··· ··· ···· ···· ···· ॥<br>··· ··· ···· ··· ···· ··· ··· ।<br>··· ··· ··· ···· यथाविधि ॥<br>पृ० १७२ | द्र० स० क० ५।९३-९६ |

---

१. केषुचित् पुस्तकेषु षोडशाध्याये, केषुचित् प्राचीनमुद्रितेषु पुस्तकेषु सप्तदशाध्याये समुपलभ्यन्त इमे श्लोकाः।

| साहित्यमीमांसा | ग्रन्थान्तरम् |
| --- | --- |
| प्रत्यक्षादिप्रतीतार्थो योऽन्यथा नोपपद्यते ।<br>... ... वदन्ति ताम् ॥<br>पृ० ७८ | ... प्रतीतोऽर्थो यस्तथा ... ।<br>... ... ॥<br>( स० क० ५।१२) |
| अभावोऽपि प्रमाणाभावः<br>पृ० १०८ | असत्ता या पदार्थानामभावः सोऽभिधीयते ।<br>(स० क० ३।५४) |



